३५

पिल्लै लोकाचार्यस्वामिभिर्द्राविड्यामनुगृहीतम् काञ्ची प्रतिवादिभयंकरमठाधीश्वरश्रीमदनन्ताचार्यस्वामिभिस्संस्कृतेऽनूदितम्

# तत्त्वत्रयम्

व्याख्याकारः

शिवप्रसाद द्विवेदी (श्रीधराचार्यः)

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

पिल्लै लोकाचार्यस्वामिभिर्द्राविड्यामनुगृहीतम्, काञ्चीप्रतिवादि भयंकरपीठाधीश्वरश्रीमदनन्ताचार्यस्वामिभिस्संस्कृतेऽनूदितम्

# तत्त्वत्रयम्

( संस्कृतछात्रतोषिण्या, हिन्दी आमोदेन, पाठभेदेन च समलंकृत

व्याख्याकार :

**शिवप्रसाद द्विवेदी [श्रीधराचार्यः]**

साहित्यवेदान्ताचार्यः एम० ए० ( हिन्दी संस्कृत )

वेदान्तविभागाध्यक्ष: आयोध्यिकश्रीहनुमत्संस्कृतमहाविद्या

मुख्यवितरक :

**माडर्न बुकडिपो**

शृङ्गारहाट, अयोध्या (उ०प्र०)

प्रमुखवितरक :

**आदर्श पुस्तक भ**

अस्पताल मार्ग (बा

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# समर्पणम्

श्री १००८ श्रीमद्वेदमार्ग प्रतिष्ठापनाचार्याणामुभय-वेदान्त
प्रवर्त्तकाचार्याणाम् श्रीमत्परमहंसपरिव्राजकाचार्याणाम्
भवभयाभितप्त जनभागधेय- वैभवभाविज्ञावताराणाम्
वृतवर्तमान वर्तिष्यमाण समस्तकुमतिमत-
समूलोन्मूलन साधिष्ठत्रयन्ततत्त्वहितपुमर्थंस-
म्प्रदायस्थापकानांनिखिलतन्त्रनिष्णा-
तानामस्मत्कुल-देवतानां जग-
दाचार्य श्रीमद्भगवद-
नन्तपादीयानाम्

-०-

श्रीमद्विष्वक्सेनाचार्यत्रिदण्डिस्वामिनाम्

करकमलेषु सादरं; सश्रद्धं; समर्पयति संस्कृते हिन्दी
व्याकृत्य तत्त्वत्रयम्-

श्रीधराचार्यः
( शिवप्रसाद द्विवेदी )
श्यामसदन, कटरा, अयोध्या

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# अनुक्रमः



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# ग्रन्थकर्तुस्संस्तवः

वेदार्थसारजनकं स्मृतिबालमित्रम् ।
पद्मोल्लसद्भगवदङ्घ्रिपुराणमित्रम् ॥
श्रीमन्त्रराजमनिशं हृदि भावयन्तम् ।
श्रीविष्वगार्यंयतिराजमहं प्रपद्ये ॥
नीचेऽपि ज्ञानरहिते मयि सागसेऽपि ।
प्रादात् पयः करुणया भुवि ज्ञानरूपम् ॥
प्रेमाम्बुवाह अतिलौकिक आशुतोषः ।
सेनेशयोगियतिराड् जयताद् जगत्याम् ॥
लोकाचार्याय गुरवे कृष्णपादस्यसूनवे ।
संसारभोगि संदष्ट जीवजीवातवेनमः ॥

पिल्लैलोकाचार्यः षट्त्रिंशतसहस्रिकाग्रन्थनिर्मातुः कृष्णपा-दाचार्यस्वामिनः पुत्र आसीत् । अस्य जन्म कलिवैरिद-गुरोरनुग्रहेणाभूत् । कदाचित् कलिवैरिदासः गुरुस्स्वशिष्यस्य कृष्ण-पादस्वामिनो गृहे प्रेम्णातिशयितेनागात् । तदात्वे सर्वेषु प्रणिप-परेषु कृष्णपादस्वामिनो जायायां आर्द्रवसनधारिण्यां नमस्कृत्या-ष्ठन्त्यां प्रेमातिशायेन तामाहूय तस्या जठरं स्पृशन्नेवमवोच-भद्रे मत्सदृशमेकं तनयमवाप्नुही'ति । 'योगिनां सत्यसंकल्पो भ-मपि बीजमङ्कुरयति' इति नियमानुसारेण ततोऽवन्तवंत्नी कृ-

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

पादस्वामिपत्नी द्वादशे मासे क्रोधनाख्ये संवत्सरे, तुलाराशिमासादिते भगवति भास्करे, श्रवणाभिधानां तारामुपगते च चन्द्रमसि, तेजः पुञ्जसमन्वितं कुमारमेकमजीजनत् । 'द्वादशेऽहनि पितानाम कारयेदि'ति नियमानुसारेण पिता 'स्वाचार्यानुग्रहजन्मायं कुमारः' इति मत्वा तस्य नाम 'लोकाचार्यः' अकरोत् ।

सोऽयं लोकाचार्यः काले-काले ब्रह्मणानुकूलैस्सर्वैः संस्कारैः संस्कृतः स्वपितुरेवसविधे समधि गतवेदान्ततत्त्वः, स्वकीयया परमया कृपया यथा स्त्रीशूद्रादयो जडजना अपि समधिगच्छेयुस्तथा द्राविड भाषया श्रुतिशिरोनिकरसारभूतानर्थान्प्रत्यपीपददष्टादशप्रबन्ध निर्माण माध्य-[illegible] । तेषां नामानि नीचैर्यथा प्रथितानि–

(१) तनिप्रणवम् (२) तनिद्वयम् (३) तनिचरमम् (४) याद्द-[illegible]कपडि (५) श्रियः पतिप्पडि (६) मुमुक्षुप्पडि (७) परन्दपडि, सप्तप्रबन्धानुरहस्यत्रयवि[illegible]रणरूपाः (८)तत्त्वत्रय (९)तत्त्वशेखरौ [illegible]त्रयविवरणरूपौ; (१०) प्रपन्नपरित्राणम् प्रपत्तेरवश्यं कर्तव्य-[illegible]ः प्रतिपादकम्, (११)सारसंग्रहः प्रति[illegible]दयति यत् शठकोपमुनेः [illegible]गीते गाथासहस्रम् द्वयमन्त्रविवरणरूपम् । मुक्तप्राप्यफलप्रति[illegible]ौ (१२) प्रमेयशेखर (१३) अर्चिरादिमार्गौ ( १४ ) नवविध [illegible]ः जीवेश्वरयोस्सकलसंबन्धप्रतिपादकः, [१५) नवरत्नमाला [illegible]दयति यत् प्रपन्नः आत्मानं स्वदेहं देहानुबन्धिनो बन्धून्, [illegible]रणः, देवतान्तरं, श्रियं, श्रीशं च कथं मन्वीत । [१६] संसार [illegible]ज्यं संसारस्य हेयतां प्रतिपादयति । प्राप्यप्रापकोपायविरो-[illegible]धनां स्वरूप प्रकारश्च निरूपयति (१७) अर्थपञ्चकम् । [illegible]

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

शास्त्रसारार्थं प्राकीकशत् [१८] श्रीवचनभूषणनामकं दिव्यंशास्त्रम् ।

लोकाचार्यस्यानुजः रम्यजामातृदेवगुरुरासीत् । अयमपि 'आचार्य हृदय' प्रभृतीनां ग्रन्थानां कर्ता । सोऽयरंम्यजामातृदेवगुरु अल्प एव व्यसि लीलाविभूतिविहाय परमपदमगात् । तद्वियोग-भूम्ना खिन्नमना अपि लोकाचार्यः कथं कथंचित्स्वचित्तं समाश्वास्य स्वस्थचित्तस्सन् श्रीरङ्गमध्यतिष्ठत् । एतेषां श्रीशैलनाथजिह्वा-वदधीशदासौ चातिनिपुणौ शिष्यावभूताम् ।

कदाचित्तुरुष्काणामाक्रमणं श्रीरङ्गमस्योपयुभूत । तंर्बहुधा-बाध्यमानेसात्त्विकजने श्रीलोकाचार्यस्वामिनः कैश्चिदन्तरङ्गैशिश-ष्यैस्सह श्रीरङ्गविमानगेहप्रतिहारं पिधायप्रस्तरेण, श्रीभूदेवि[illegible] मुत्सवमूर्ति श्रीरङ्गनाथं साकमादायवने प्राविशन् । तत्र पु[illegible] भगवद्रङ्गनाथस्यमूर्तिसहितं सर्वस्वमपहृतवन्तः वनेनिवसतां ल[illegible] चार्याणाम् । इत्थं भगवन्मूर्त्यपहारजन्यवियोगवैपुल्येन विषण्ण[illegible] लोकाचार्यस्वामिनः श्रीवैकुण्ठमुपजगुः ।

### श्रीवरवरमुनेश्चरितम्

'पाथो भावंगतायां कलियुगशरदि शद्धराये शकाब्दे,
वर्षे साधारणेऽर्के समधिगततुले वासरे तीरसंख्ये ।
वारे जैवे चतुर्थ्यां समजानि च तिथौ शुक्लपक्षे सुकर्म[illegible]
भोजन्मूलाख्यतारे यतिपतिरपरो रम्यजामातृनामा ॥

इत्युक्त्यनुसारेण दीप्रशयानापरनाम्नो जिह्वावदधी[illegible] गुरोर्धर्मपत्न्यां कलावतीतेषु एकसप्तत्युत्तरचतुश्शताधिकेषु साधारणाब्दे चाश्वयुजि मासे शुक्ले पक्षे चतुर्थ्यां गुरुवासरे

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

क्षे ऽवातरन्नम्यजामातृमुन्यपरनामधेयाः श्रीवरवरमुनीन्द्राः । बाल्या-
देव यथायथाऽयं ववृधे बालः तथा तथास्य ववृधिरे परभक्ति
परज्ञानपरमभक्तयोऽपि । एवं प्रतिदिनमेधमानमेनं बालमवलोक्या-
स्य पिता यथाकालं यथाविविधि च संश्चकार तैस्तैस्संस्कारैः ब्राह्म-
णोचितैः । अयं बालः स्वपितुः दीप्रशयानाचार्याणामेव सविधे
साङ्गानसशिरस्कान् वेदान् द्राविडवेदान्तांश्चाध्यगीषत । एतेषामाचा-
र्यश्श्रीशैलपूर्णाचार्या आसन् । इमे स्वाचार्याणामन्तिमेच्छानुसारेण
संस्कृताम्नायापेक्षयाद्राविडाम्नायस्यैव प्रचुरंप्रचारमकार्षुः । वरवर-
मुनिकृताः निम्नांकिता ग्रन्थास्सन्ति-(१) षट्त्रिंशत् साहस्री
प्रमाणसंग्रहः २-गीतार्थसंग्रहदीपिका, ३-यतिराजविंशतिः ३-
(१) ता भूषणव्याख्या, ४-मुमुक्षुपडिव्याख्यानम्, ५-आचार्य हृदय-
कपडि म्, ६-ज्ञानसारव्याख्यानम् । ७-प्रमेयसारव्याख्यानम् ८-
चित्तसूरिविरचिततिरुमोलिव्याख्यानम्, ९-तत्त्वत्रयव्याख्यानम्,
सप्तप्र
यविवरण गाथा व्याख्यानम्; ११-आर्तिप्रबन्धः, १२-उपदेशरत्नमाला
ः प्रतिप यमीलिनूतन्दादि १४-भगवदाराधनविधिश्च ।
गीते गर्थ षु गीतार्थसंग्रहदीपिकां यतिराजविंशतिं च विहायान्ये
ही (१२) मपिप्रवालभाषायामेव सन्ति । एकदा केचन दुष्टा एतेषां
यः जीवेशं दर्शं-दर्शं समवाप्य कालमुटजमेवाज्ज्वालीयन् एतेषाम् ।
दयति यतारस्त्वादिमे सर्परूपं धृत्वा कैनचिच्छिद्रेणनिरगुः । पुन
रणः, देवतद्विषयरहस्य ग्रन्थस्य प्रवचनमाध्यमेन कालं क्षिपन्
ज्यं संसारीकृत्य श्रीरङ्गधामन्येवावात्सुः । एभिरष्टदिग्गजरूपेणाष्टौ
यनां स्वरूपास्ते च--

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

श्रीवादिभीकरमहागुरुदेवराजश्रीभट्टनाथवरवेङ्कटयोगिवर्याः ।

रामानुजार्यवरदार्यनतार्तिहारिश्रीवानशैलमुनयोऽष्टदिशांगजास्ते ॥

इति श्लोके उक्तास्सन्ति । एतष्वन्यतमः प्रतिवादिभयंकराचार्यास्सन्ति येषामेवान्ववायेऽभूवन् काञ्चीप्रतिवादिभयंकरमठाधीश्वराः श्रीमदनन्ताचार्यस्वामिनः, यैःकृत एव संस्कृतानुवादस्तत्त्वत्रयस्य मूलनाम्ना मुद्रितोऽस्ति अस्मिन् ग्रन्थे ।

## तत्त्वत्रय—परिचयः

तत्त्वत्रयमेव वैदिकानां सारतमः सैद्धान्तिकोऽर्थः । तत्त्वत्रयस्यैव प्रतिपादने सर्वेषां वेदवाक्यानां परमं तात्पर्यमिति वैदि... अभिप्रयन्ति । तत्त्वत्रय शब्देन हि चिदचिदीश्वरा अभिधी... तत्र चित्, चेतनो जीवः, प्रत्यक्, आत्मा प्रभृतयः शब्दाः ... नार्थका इति शब्दविदः । अचेतनम्, अचित्, ...क् प्र... प्रधानम्, अक्षरम्, जडः इत्यादयः शब्दाः प्रकृतिमेवाभिद... ईश्वरः, परमात्मा, ...रंब्रह्मेत्यादिकाः शब्दाः ईश्वरमेव व...

'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' (श्वे० १।१२) ज्ञाज्ञौ ... वीशनीशौ' (श्वे० श्व १।९) क्षरं प्रधानममृताक्षरं हरः क्षर... वीशते देव एकः' ( श्वे० १।९ ) प्रधानक्षेत्रज्ञपतिगुणेशः ... ६।१६) अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्... श्रुतयः ।

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः
तस्माल्लोके च वेदे च प्रथितः पुरुषोत्तमः ॥
इत्यादीनि गीतावाक्यानि--

'नेतरोऽनुपपत्तेः' ( शा० मी: १।१।१७ ) 'भेदव्यपदेशाच्च' (शा० मी० १।१।१८) 'अनुपपत्तेस्तु न शारीरः' (शा० मी० १।२।३) कर्मकर्तृव्यपदेशाच्च' ( शा० मी० १।२।४ ) 'संभोगप्राप्तिरितिचेन्न वैशेष्यात्' ( शा० मी० १।२।८ ) 'मुक्तोपसृप्यव्यपदेशाच्च' ( शा० मी० १।३।२ ) सुषुप्त्युत्क्रान्त्योर्भेदेन' (श० गी० १।३।४३) 'अधिकं तु भेदनिर्देशात्' (शा० मी० २।१।२२) प्रभृतीनि सूत्राणि च तत्त्वत्रयस्वरूपयाथात्म्यं तस्य पारस्परिकं संबन्धम् भेदांश्च प्रतिपादयन्ति तेषां व्याख्यानाम् साक्ष्ये वक्तुं शक्यते--शेषत्वे सति चेतनत्वम् जीवसामान्यलक्षणम् परप्रकाशत्वे सति विकारास्पदत्वमचित्सामान्य लक्षणम् । चिदचिदोरसंकीर्णतया शेषित्वमाधारत्वं नियामकत्वञ्चेश्वरलक्षणम् ।

## तत्त्वत्रयोपन्यासः

भवभयाभितप्तजनभागधेयभावितावताराः पिल्लै लोकाचार्यस्वामिनः जननमरण पदवीजङ्घालानां सकलशास्त्रपर्यालोचनेऽप्रभूणामल्पेनैव प्रयासेन वेदवेदान्ततत्त्वमधिजिगमिषताम् संसारिणां तेषां स्वजनानां जीवनमुन्निनीषया 'तत्त्वत्रयरहस्यम्' नामकं नूनं नूतनं निबन्धं द्राविड्यां न्यभान्त्सुः ।

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

तदात्वे तत्समकालीनः विशदवाक्शिखामणयः प्रपन्नजनक-लपादपाः श्रीमद्वरवरमुनयः श्रीलोकाचार्यस्य सर्वेषां ग्रन्थानां व्याख्यान प्रसंगेन 'तत्त्वत्रयस्य' विशदं व्याख्यानं मणिप्रवालभाषायामकार्षुः परञ्चानयोः मूलव्याख्यानग्रन्थयोः द्राविडमयत्वात् औत्तराहेषु प्रचारो नासीत् । द्राविडा एव विद्वांसः तयोः ग्रन्थयो अभिज्ञा अभूवन् । पुनः इदानींतनतः शतवत्सरेभ्यः प्राक् श्रीरंगमंदिरस्य पूज्यचरणा अध्यक्षः श्रीगोवर्धनरङ्गाचार्यस्वामिनः सर्वेषां द्राविडग्रन्थानां संस्कृतानुवादकर्मणिव्यापृतास्सनतस्तत्त्वत्रयस्य सभाष्यस्य संस्कृतानुवादमकार्षुः तदात्वे एव कांञ्चीप्रतिवादिभयङ्करमठाधीशाः श्रीमदनन्ताचार्य स्वामिनः संकृतानुवादेसंस्कृतसरण्या तत्त्व... तीनामनेकेषां ग्रन्थानां। नामनुवादमकुर्वन आभ्यां संस्कृतेसंस्कृता... उत्तरेऽपिभारते दाविडाम्नायस्य प्रचुरः प्रचारः संजातः। पुन... वैक्रमाब्दे वृन्दावनस्थाः पं० रामगोपाल शास्त्रिणः तत्त्वत्र... हिन्द्यांविशदं व्याकृत्य प्रकाशतामनैषुः ।

तस्यैतस्य तत्त्वत्रयग्रन्थस्य त्रीणि प्रकरणानि सन्ति-... प्रकरणम् (।।) अचित् प्रकरणम् (।।।) ईश्वर प्रकरणञ्च ... प्रकरणे- तत्त्वत्रयमुद्दिश्य जीवस्य स्वरूप--याथात्म्यं प्र... मास्ते । द्वितीये प्रकरणे प्रकृतेः प्राकृतानाञ्च स्वरूपनिरूपण... तृतीये प्रकरणे चिदचिदोर्नियामकस्य परमात्मनः स्वरूप... तम् । तदेवत् सर्वं प्रकरण त्रयमनुसृत्य मनाग् व्याक्रिय...



CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

# चित्प्रकरणम्

विशिष्टाद्वैतसिद्धान्ते जीवस्वरूपम्:—

आत्मनः स्वरूपं प्रतिपादयन्तः श्रीलोकाचार्यस्वामिनः प्राहुः- 'आत्मस्वरूपम् 'शेन्नु शेन्नु परम्परमाय्' इत्युक्तप्रकारेण देहेन्द्रियमनःप्राणबुद्धिविलक्षणम् अजडमानन्दरूपं नित्यमणुमव्यक्तमचिन्त्यं निरवयवं निर्विकारं ज्ञानाश्रयभूतमीश्वरस्यनियाम्यं धार्यं शेषभूतं च।' अस्मिन् लक्षणे विलक्षणमित्यन्तम् परमतंनिरस्य स्वमतानुसारेण अजडमारभ्य शेषभूतञ्चेति पर्यन्तमात्मलक्षणं चकार। तत्र 'देहेन्द्रियमनः प्राण बुद्धिविलक्षणमिति पदेन ग्रन्थकारः देहात्मवादिनां, (१) इन्द्रियात्मवादिनां मन आत्मवादिनां, प्राणात्मवादिनाञ्च चार्वाकाणां, ज्ञानात्मवादिनां बौद्धानां निर्विशेषाद्वैतिनाञ्चमतं निराचकार। तेषां मतानां खण्डनं आत्मसिद्धि ग्रन्थे सविस्तरं कृतं श्रीमद्यामुनाचार्यस्वामिभिः, परञ्च ग्रन्थकारः ग्रन्थविस्तारभिया तदपरा काश्चन नवीना युक्तीः प्रस्तौषीत् याभिः तेषां सर्वेषां पूर्वपक्षमत समकालमेव निराकृतं भवति। ताश्च युक्तयः निम्नांकिताः (१२) सन्ति:—

जीवे १-ममदेहः, ममेन्द्रियाणि, मम मनः, मम प्राणाः, मम ज्ञानयति इत्यादिषु प्रतीतिषु ममेति पदेनात्मानं परामृश्य तत्सबन्धित्वेन ..., देवादिकमनुभवति लोकः। संबन्धस्य च भिन्ननिष्ठतया भिद्यते देहा... संसारी आत्मा। किञ्च- २-इत्थमेव सर्वासु प्रतीतिषु देहादिकमि... स्वशरीरतासृश्यते; अत्मा च सर्वत्राहमेतीदंकारगोचराद्देहादिकाद्भि... अहंकारगोचर आत्मा। ३--किञ्च देहादयः सर्वदानहि भासन्ते।

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

तथाहि–देहस्य स्वापादिकाले नहि भवति प्रतीतिः । अथवा–अनित्यत्वादेव देहः अतीतानागतकालयोरव्यक्तत्वादेवनोपलभ्यते । इन्द्रियाण्यपि आन्ध्यबाधिर्यादौ नोपलभ्यन्ते, संकल्पविकल्पसाधनं मन अपि तथैव मूढावस्थायां नोभासते; प्राणाऽपि मूर्च्छादौ नोपलभ्यन्ते, परञ्चात्मातु नित्यत्वादेवैतेषु नोपलभ्यमानेष्वपि सर्वदोपलभ्यते इति विद्यते देहादिभ्य आत्मा ! ४–एवमेव–देहादय अनेके सन्ति-तद्यथा अवयवसंघातरूपत्वाद्देहा अनेके । चक्षुः श्रोत्रादीनीन्द्रियाण्यपिनैकानि; मन अपि चित्तादि भेदेनानेकप्रकारकं, प्राणापानादि भेदेन प्राणा अपि अनेके, ज्ञानमपि प्रत्यक्षादि भेदेने नैकप्रकारकमितिभिद्यतेऽनेकेभ्य देहादिभ्य एक आत्मा । सोऽयमात्मा स्वयंप्रकाशत्वादजडः, सुखस्वरूपः, नित्यः, अणुपरिमणःकः, इन्द्रियातीतत्वादव्यक्तः, अचिद्भिसजातीयतया अचिन्त्यः, षड्पार्श्वरहितत्वान्निरवयवः, निर्विकारः, परमात्मनः शरीरभूतत्वात्तस्य, शेषोनियाम्यश्च भवति ।

अस्य लक्षणस्यमूलंहि भगवत्पाद्यामुनाचार्योक्तम्–"देहेन्द्रियप्राण धीभ्योन्योनन्य लक्षणः । नित्यो व्यापी प्रतिक्षेत्रमात्मा ... स्वतः सुखी । ( आ॰ सि॰ ३ )

इति लक्षणम् वर्तते । परञ्चेदं लक्षणमतीवविस्तृतं मत्वा ग्रन्थकारेण 'शेषत्वेसतिज्ञातृत्वमात्मनो लक्षणम्' इति निष्कृष्टम् लक्षणमुक्तम् ॥

नैयायिकमतशोधनम्–

नैयायिकाः आत्मनः परिमाणविषये विवदन्ते । ते ...

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

परिमाणं विभु स्वीकुर्वन्ति । आत्मनो विभुत्वं खण्डयता ग्रन्थकारेण प्रतिपादितं यत् यदि आत्मा विभुः स्यात्तर्हि आत्मनः हृदय वर्तित्वस्य लोकान्तर गमनस्य, लोकान्तरादागमनस्य, उत्क्रमणस्य च प्रतिपादिकाः श्रुतयो वाध्येरन् । तथाहि 'हृदिहेयषात्मा' (प्रश्न० उ०३।६ ) इति श्रुति जीवस्य हृदिवर्तित्वम्; 'प्रद्योतेनैव आत्मा निष्क्रामति चक्षुषो वा, मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः ।' [ बृ०उ०६।४।२ ] इति श्रुतिः जीवस्य अस्माच्छरीरादुत्क्रमणम्; 'ये व के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वेगच्छन्ति' (कौ०उ० १।२] प्रभृतयश्श्रुतयो जीवस्य चन्द्रादिलोकेषुगमनम्; 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' [ बृ०उ०।४।४।६ ) इत्यादिकाः श्रुतयो जीवस्य लोकान्तरादागमनञ्च प्रतिपादयन्ति ।'

यदि आत्मा विभुः स्यात्, तर्हि आत्मनः सर्वव्यापकत्वाद् तस्य हृदयप्रदेशवर्तित्वोत्क्रमणगमनागमनागमनानि च नोपपद्येरन् अत आत्मनोऽणुत्वमवश्याभ्युपेयम् । तथा चाह सूत्रकरोऽपि उत्क्रान्तिगत्यागतीनाम् ( शा०मी० २।३।२० ) ।

किञ्च 'एषोऽणुरात्मा चेतसावेदितव्यः' ( मु०उ०३।१।९ ) बालाग्रशतभागस्य शतधाकल्पितस्य च । भागोजीवस्स विज्ञेयो स चानन्त्याय कल्पते । (श्वे०५।९) इमाश्श्रुतयः साक्षाज्जीवस्याणुत्वं प्रतिपादयन्ति । न चात्मनोऽणुत्वे हृदिवर्तित्वं च स्वीकारे तस्य सर्वशरीरे सुखाद्यनुभवः कथमुपपद्येतेति वाच्यम्; मणिद्युमणि प्रभृतीनां क्वचिदवस्थानेऽपि प्रभायास्सर्वत्रैकरूपेण व्याप्तिवज्ज्ञानस्य व्यापकरूपेण व्याप्त्या तदनुभवो न विरुद्धयते । तथा चाह भगवान्

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

बादरायणः 'गुणाद्वालोकवत्, (शा॰मी॰२।३।२६)।

जैनमत शोधनम्

जैनाः प्रतिपादन्तियत्' शरीरपरिमाणक आत्मा' इति। तेषां मत-मालोचयता ग्रन्थकारेणोक्तम् यत् यद्यात्माशरीरपरिमाणक एव स्यात् तर्हि आत्मनोऽणुत्वप्रतिपादिकानां 'एषोऽणुरात्मा चेतसा वेदितव्यः (मु॰उ॰३।१।९] 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' [श्वे॰५।८] 'बाल ग्रशतभागस्य॰ [ श्वे॰५।९ ] हृदि ह्येष आत्मा' [ प्र॰उ॰३।६] इत्यादिकानाम् श्रुतीनां विरोधः स्यात्। किञ्च स्वकर्मवशात् गज-शरीरवर्ती आत्मा पिपीलिकाशरीरे न मीयात्। एतद्दोषपरिजिहीर्षया आत्मन स्वरूपे 'सङ्कोचविकासस्वीकारे आत्मनो नित्य... परिहीयेत; किञ्चानेकशरीरपरिग्रहं कुर्वतां सौभारिप्रभृ... स्वरूपस्य भिदुरत्वप्रसंग इति आपातरमणीय एवाऽर्हतानां अत... देहपरिमाणवादः।

साँख्यमत शोधनम्

सांख्यमतावलम्बिनः कर्तृत्वभोक्तृत्वादिकमात्मनोऽनङ्गीकृत्य प्रकृतेः स्वीकुर्वन्ति ते कथयन्ति यत् कवल्याम् 'न जायते म्रि... (कठो॰२।१।८) इति श्रुत्या आत्मनो जन्मजरामरणरहितत्वं प्रति... 'हन्ता चेन्मन्यते हन्तुम् हतश्चेन्मन्यते हन्तुम् हतश्चेन्मन्यते ह... उभौ तौ न विजानीतो नायं हन्ति न हन्यते' (कठो॰२।१९) श्रुत्या आस्य हननादिक्रियायां कर्तृत्वं प्रतिषिध्यते। अत... स्य कर्तृत्वाभिमाना मोह एव। भगवान्नप्यगीयत–

'प्रकृतेः क्रियमाणानि गुणैः कर्माणिसर्वशः।
अहंकार विमूढात्मा कर्ताहमितिमन्यते॥ (गी॰३।२...

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

तथा–'कार्यकारणहेतुत्वे हेतुः प्रकृतिरुच्यते ।'

पुरुषः सुख दुःखनां भोक्तृत्वे हेतुरुच्यते ॥ ( गी०१३।२० )

किञ्च–'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति । (गी०१४।१९)

अतएव कर्तृत्वभोक्तृत्वादिकाः प्रकृतेरेव धर्माः नत्वात्मनः ॥

तेषां मतं निराकुर्वता ग्रन्थकारेणोक्तं–यद्यात्मनः कर्तृत्वं नो भवेत् तर्हि विधिनिषेधरूपाणि शास्त्राणि व्यर्थानि स्युः । शास्त्राणि हि–स्वर्गमोक्षादि फलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते । नह्यन्यस्य कर्तृत्वेऽन्यो नियुञ्जते । शासनाच्च शास्त्रम् । शासनञ्च प्रवर्तनम् । शास्त्रस्य च प्रवर्तनम् बोधजनन द्वारेणैव । अचेतनं प्रधानं नहि बोधयितुम् शक्यम् । अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत् । उक्तञ्च जैमिनिना–शास्त्रफलं प्रयोक्तरि । अतएव शास्त्राणामर्थवत्त्वाय जीवस्यकर्तृत्वमवश्यमभ्युपेयम् । सांसारिक प्रवृत्तिषु कर्तृत्वं न स्वरूप प्रयुक्तमपि तु प्रकृति संबन्धकृतम् । प्रकृतेः क्रियमाणानीत्यादीनि वाक्यानि तथाविधमेव कर्तृत्वं प्रतिपादयन्ति । इममखिलमर्थसार्थमभ्यधत्त भगवान् बादरायणः 'कर्ता शास्त्रार्थवत्त्वात्' ( शा० मी० २।३।३३ ) सूत्रे । तच्चकर्तृत्वमीश्वराधीनमिति प्रत्यपीपदत् भगवान् बादरायणः–'परात्तु तच्छ्रुतेः' (शा० मी० २।३।४०) इति सूत्रे ।

विशिष्टाद्वैतसिद्धान्ते जीवानां त्रयो भेदाः स्वीक्रियन्ते–बद्ध, मुक्त नित्या इति । इत्थं जीवानां परस्परं भेदः स्वाभाविकः ।

अद्वैतमत शोधनम्

अद्वैतिनः आत्मनो भेदं नहि स्वीकुर्वन्ति । तेषांमते एक

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

एव जीवः। अविद्याग्रस्तत्वात् स एवाखिलं मिथ्या जगत् पश्यति। अविद्यापगते सः भ्रमो नश्यति। तन्नोचितम्। यतो हि—'पुरुष एवेदं सर्वम्' (पु० सू० २) 'सर्वं खल्विदं ब्रह्म' इत्यादीनि सामानाधिकरण्यवाक्यानि, ब्रह्माद्वैतस्यैव प्रतिपादनं कुर्वन्ति, सामानाधिकरण्य वाक्यस्यानेकविशेषणविशिष्टस्यैकस्यैव वस्तुनः प्रतिपादने तात्पर्यत्वात्। अतएव 'सर्वंखल्विदं ब्रह्म' इति वाक्यं 'सर्वमिति पदवाच्यस्य सम्पूर्णचिदचिद्विशिष्टस्य ब्रह्मपदवाच्येन सत्यसंकल्पत्वादि विशिष्टेन ब्रह्मणा सह अभेदं प्रतिपादयति। तथैव 'पुरुष एवेदम्' इति सामानाधिकरण्य वाक्यमपि। अतएव ब्रह्माद्वैतमेव शास्त्रतात्पर्यम्। 'एकस्सन् बहुधाविचचार' 'नित्यो नित्यानाम्' इत्यदीनि वाक्यानि ब्रह्मप्रकारभूतानां जीवानाँ बहुत्वं क[illegible] वदन्ति। अतएव जीवाद्वैतं श्रुति हृदय विरुद्धम्। [illegible]

किञ्च जीवाद्वैतवादिनां मते समकालमेव कस्यचित् सु[illegible] कस्यचिद्दुखित्वं, कस्यचित् शिष्यत्वं, कस्यचिदाचार्यत्वञ्च [illegible] पद्यते। यतः जीवाद्वैतिनां मते एतेषां सर्वेषामनुभवानामाश्रय[illegible] एव। तस्यैव समकालमेव सुखित्वं, दुखित्वं, शिष्यत्वमाचा[illegible] कथं सम्पत्स्यते ? अथ स्याद् देहभेदादिति चेन्न; देहभे[illegible] भवभेदे मूलत्व स्वीकार अनेक शरीरपरिग्रहं कुर्वन् सौभ[illegible] समकालमेव सुखीदुखी च स्यात्। न चानुभवति तथा [illegible] मुनिः तस्मादात्मभेदोऽवश्यमङ्गीकर्तव्यः।

भास्करमतशोधनम्—

जीवेषु परस्परमौपाधिकभेदवादिनो भास[illegible] लम्बिन आतिष्ठन्ते—'भोक्ता भोग्यं प्रे[illegible]

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मत्वा' 'ज्ञाज्ञौद्वावजावीशनीशौ (श्वे०१।९ ) 'क्षरं प्रधानममृताक्षरं हरः' ( श्वे०१।९ ) इत्यादिषु श्रुतिषु 'भोक्ता' 'अज्ञः' 'हरः' इत्यादिभिरेकवचनान्तपदैः जीवस्य निर्देशाज्ज्ञायते यत् जीवाना-म्भेद एव स्वाभाविकोऽभेदस्त्वौपाधिकः। तस्यैवौपाधिकस्य भेदस्य प्रतिपादनम् 'नित्योनित्यानामि' त्यादिकाः श्रुतयः कुर्वन्ति + इति। तन्नोचितम् -मोक्षदशायामपिभेदस्य सत्वात्। 'तथाचगीयत भगवान् गीतायाम्-"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च।" ( गी०१४।२ ) इति वाक्यं प्रतिपादयति यत् वक्ष्यमाणं ज्ञानमवाप्य जीवाः मुक्तौ परमात्मधर्माणां ...यितुमर्हतामुपयान्ति, तेहि सृष्टिसंहारयोर्विषया अपि नोभवन्ति। अस्मिन् ...त्वे ...वये 'मम साधर्म्यमागताः' इत्यंशे बहुवचनान्तप्रयोगः जीवानां ...स्त्र बहुत्वं साधयति। यदि भेदः औपाधिक आविद्यको वा स्यात्, तर्हि ...त्ति मोक्षावस्थायां तन्नश्येत्। यस्मात् कारणान्नहि नश्यति तस्मात्का... कृतेः ...णाज्ज्ञायते यत् भेद एव स्वाभाविक इति। यतोहि सर्वविधोपाधि ...यन्ति निर्मुक्तावस्थैव मोक्षशब्देनाभिधीयते। अतएवहि 'सदा पश्यन्ति ...त्रार्थवयः' इत्यादि वाक्येषु बहुवचनान्त प्रयोगः सूरिपदवाच्यमुक्त ...राधीन...षयक उपपद्यते। भोक्तृभोग्यमित्यादि श्रुतयश्च जीवजातेरेकत्व ...मादायोपपद्यत इत्यालमति विस्तरेण।

...विशिष्टाचित्प्रकरण समालोचनम्:—

नित्या...शिष्टाद्वैतसिद्धान्तेऽचित्स्वरूपम्

तमत ज्ञानशून्यत्वे सतिविकारास्पदत्वमचित्लक्षणम्। तस्य च-अशुद्धसत्वं, मिश्रसत्वं, सत्वशून्यञ्चेति त्रयो भेदा भवन्ति। तत्र

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

त्रिपाद्विभूतिः, नित्यविभूतिः, वैकुण्ठमित्यादिकाः शब्दाः शुद्धसत्त्व-स्य वाचकाः । 'त्रिपादस्यामृतं दिवी' (पु०सू०३)ति श्रुत्यासमाम्ना-तमिदमुपर्यपरिच्छिन्नं नीचैर्लीलाविभूत्या परिच्छिन्नं नित्यमुक्तैर-ध्युषितमजडञ्च वर्तते ।

मिश्रतत्त्वशब्देन चतुर्विंशतितत्त्वात्मिका प्रकृति रुच्यते । तदिदं सत्त्वरजस्तमोगुणयुक्तं बद्धानां ज्ञानानन्दयोस्तिरोधायकं विपरीतज्ञानजनकं, नित्यं, परमात्मनः क्रीडापरिकरभूतं देशभेदेन कालभेदेन च सदृशानां विसदृशानां च विकाराणाञ्जनकं भवति । प्रलयावस्थायां मिश्रसत्त्वं सदृशान् विकारान् सृष्टौ च विसदृशान् विकारांश्च जनयति ॥ नामरूप विभागान-र्हावस्था विकाराणां सदृशत्वं, नामरूपविभागार्हावस्था गु... विसदृशत्वमित्युच्यते । प्रकृतिर्महानहंकारः पञ्चज्ञानेन्द्रियाणि, ... कर्मेन्द्रियाणि, मनः 'पञ्चविषया पञ्चमहाभूतानीति प्राकृतिकं... चतुर्विंशति तत्त्वानि । तन्मात्राणां भूतानां सूक्ष्मावस्थात्वात्, त... पृथङ्नोगण्यन्ते । उपयुक्तमुभयप्रकारकमचिदीश्वरात्मनोश्चभ... भोगोपकरणभोगस्थानभूतम् ।

काल एव सत्त्वशून्यमिति व्यपदिश्यते । इदमेव प्रकृतेःप्राकृ... परिणामहेतुभूतं कलाकाष्ठादिरूपेण परिणमार्हं ईश्वरस्यक... रिकरश्च भवति । कालः परमपदे नित्यः लीलाविभूतावनित...

**नैयायिकमतशोधनम्—**

विशिष्टाद्वैत सिद्धान्ते इन्द्रियाणां सात्त्विकाहंकारज... क्रियते । परञ्चनैयायिका इन्द्रियाणां भौतिकत्वमनुमि...

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

तदिदं नैयायिकमतं नोचितम्, शास्त्रविरुद्धत्वात् । विष्णुपुराणे हि इन्द्रियाणां भौतिकत्वमाशंक्य 'एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः' इति श्लोके देवशब्दैरभिहितानामिन्द्रियाणां वैकारिकत्वं, सत्त्वगुणजन्यत्वं प्रत्यपीपदद्भगवान् पराशरः ।

एवमेव ते दिशोऽपि द्रव्यान्तरत्वमभ्युपयन्ति । तन्नोचितम्-तस्यानेकैर्हेतुभिराकाशादावन्तर्भावसंभवात् । तथाहि-चतुर्षु दिक्षु तिष्ठत्सु पुरुषेषु मध्ये यद्वस्तु तदेकस्य पूर्वं एकस्य पश्चिम एकस्य दक्षिण एकस्य चोत्तरे भविष्यति । एतेन ज्ञायते यद्दिङ् नामक वस्त्वपेक्षाबुद्धिकल्पितम् । अतएव हि चतुर्षु दिक्षु विद्यमानानां महामेरोरुत्तर एव भवतीत्याह भगवान् पराशरः-'नैवास्तमनमर्कस्य नोदयितुोदयः सर्वदा सतः । उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ॥' (वि०-पु० १ । २ । १७) सर्वेषां द्वीप वर्षाणां मेरुरुत्तरतः स्थितः । ( वि०पु० २ । ८ । २२ )

ते हि आकाशस्य नित्यत्वं, निरवयवत्वं, विभुत्वमप्रत्यक्षत्वं च कामयन्ते । तदपि तर्कप्रमाण पराहतम्- 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादौ श्रुतावाकाशस्योत्पत्तिश्रवणादाकाशोऽनित्यः; शब्दतन्मात्रस्य स्थूलावस्थात्वात् सावयवे आकाशः; अहंकारादिष्वनुपलभ्यमानत्वादविभुराकाशः, पञ्चीकरणप्रक्रियया तस्मिन्नपि रूपसत्त्वात् । नीलमाकाशः इति, साक्षात्प्रतीतेश्चाकाशस्य साक्षात्कारः स्वीकर्तव्यः ।

किञ्च यत्ते तेजसः भास्वरशुक्लं रूपमभ्युपयन्ति तदप्यविनित्यरितरमणीयम् । 'यदग्ने रोहितं रूपं तत्तेजसः' (छा०उ०६।४।१) इति श्रुत्या तेजसः रक्तरूपता प्रतिपादनात् ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

## अथेश्वर प्रकरणसमालोचनम्

विशिष्टाद्वैत सिद्धान्ते ईश्वरस्वरूपम्-

विशिष्टाद्वैत सिद्धान्तानुसारेणेश्वरो जडचेतनात्मकस्याखिलस्य जगतो नियायकः, अखिलहेयप्रत्यनीकः, अखिलकल्याणगुणसागरः 'अर्तो जिज्ञासुरर्थार्थी ज्ञानी चेत्युक्तानां चतुर्विधानां पुरुषाणामाराध्यः लौकिकालौकिकानां फलानां निरपेक्षप्रदाता, लक्ष्मीभूनीलादेवीनां नायकश्च वर्तते । भगवान्, परमात्मा, परमब्रह्मेत्यादिकाः शब्दाः ईश्वरस्यैव साक्षाद्वाचकाः । इममेव 'यः सर्वज्ञः सर्ववित्' ( मु० उ० १।१।३ ) 'परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञान बलक्रिया च' ( श्वे० ६।८ ) 'सन्मूलास्सोम्येमाः प्रजास्सदायतनाः सत्प्रतिष्ठाः' ( छा० उ० ६। ) इत्यादिका... तयः सर्वज्ञं, सर्वशक्ति, सर्वमूलम्; सर्वाधारञ्च वदन्ति । ... ज्ञानमनन्तं ब्रह्म' ( तैति० २।१।१ ) 'एतदात्म्यमिद... ( छा० उ० ६।८।१ ) 'यस्यात्माशरीरम्' ( श० प० ब्रा... ५।२० ) 'जगत् सर्वं शरीरं ते' ( वा०रा० युद्धकांण्ड ११७... तानि सर्वाणि तद्वपुः' ( वि० पु० ) इत्यादिकानि वचां... रस्य त्रिविधपरिच्छेदरहितत्वं; सकलजगदन्तर्यामित्वम्, ... त्मत्वम्, जगच्छरीरत्वञ्च प्रतिपादयन्ति । 'यतो वा... भूतानि जायन्ते; येन जातानि जीवन्ति यत् प्रयन्त्यभिसं... न्तीति श्रुतिः परमात्मानमेव जगतः सृष्टिस्थितिसंहारा... रमुशन्ति । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि...

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

परमात्मानं जगतोऽभिन्ननिमित्तोपादानकारणतामभिधत्ते ।

सोयमीश्वरः सृष्टेरादौस्वसत्यसंकल्पेनैवेदजगत्सृजति । तत्र ब्रह्मब्रह्माण्डञ्च साक्षात् सृष्ट्वा परमात्मा हिरण्यगर्भादिकां सद्वारिकां सृष्टिं करोति । परमात्मनः सृष्टेः प्रयोजनं लीलैव । अस्यैव परमात्मनः सच्छास्त्राणि परव्यूहविभवान्तर्याम्यर्चावताररूपेण पञ्चधावस्थितिमुशन्ति । पररूपेणेश्वरः–अकालकाल्यमनंतानंदमयं नित्यमुक्त जीवैरध्युषितं 'त्रिपादस्यामृतं दिवी' ( पु० सू० ३ ) त्यादिषु श्रुतिवर्णितं देशविशेषमध्यास्ते । सएव सृष्टिस्थिति-संहारार्थम् संसारिणां संरक्षणार्थञ्च संकर्षणप्रद्युम्नानिरुद्धाख्यव्यूहरूपेणाविर्भवति । अयमेव 'परित्राणाय साधूनां, विनाशाय च दुष्कृताम् । धर्म संस्थापनार्थाय' ( भ० गी० ४।५ ) युग-युगे स्वेच्छयैव देवमनुष्यादिसजातीयतया रामकृष्णादि रूपेण विभवावतारान् गौणमुख्यभेदभिन्नान् विभर्ति । चेतनानामसाधारणबन्धुत्वात् सर्वेषामन्तः प्रविश्य नियमनं तेषाध्येयत्वार्थं रक्षणार्थञ्च हृदयकमलेऽवस्थनञ्चान्तर्यामिरूपेण करोतीति 'एष त आत्मान्तर्याम्यमृतः' 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठती ( भ० गी० ) त्यादिवचनानिवचांसि प्रतिपादयन्ति । 'भक्तावाञ्छन्ति यद्रूपं तन्मयविग्रहो भवेत्' इत्युक्त्यनुसारेण देशकालाधिकारिनियम विहायार्चकरतन्त्रसमस्तव्यापारविशिष्टंमालयेषु गृहेषु च सर्वलोकनयनगोचरतां गतस्यार्चकपरतन्त्रस्य रङ्गनाथवेङ्कटेशरामकृष्णादिमूर्तिरूपेण अद्वैतवतोऽवस्थितिरर्चावतार इति कथ्यते ।

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

परमाणुकारणवादशोधनम्—

नैयायिकाः वैशेषिकाश्च पार्थिवाप्यतैजसवायवीयपरमाणूनामेव जगतः उपादानत्वमीश्वरस्यानुमानिकस्य च निमित्तत्वं स्वीकुर्वन्ति । बौद्धा जैनाश्च परमाणोरेव कारणतामभिप्रयन्ति । इमे परमाणूनां चतुर्विधत्वरूपं भेदमपिनाभ्युपयन्ति । परञ्चैतेषां परमाणुकारणतावादः समानम् । तदेतेषां मतंनानुपपद्यते-त्रसरेणु व्यतिरिक्तानां निरवयवानां प्रत्यक्षागमप्रमाणयोरविषयभूतानामनुमानेनाऽपिसिद्धुमनर्हाणाँ परमाणूनां सद्भावे प्रमाणाभावात्, परमात्मन एव जगत्कारणताम्प्रतिपादयन्तीनाञ्छ्रुतीनाँविरोधाच्च ।

कापिलमतशोधनम्ः—

साँख्याः प्रकृतेरेव जगतः कारणताँ स्वीकुर्वन्ति । तदपि नोचितम्-प्रकृतेर्जडत्वात्, ईश्वरानधिष्ठितायास्तस्या जगद्रूपेण परिणामासम्भवात्, तस्याः कारणत्वस्वीकारेऽपि सृष्टिसंहारव्यवस्थाया असम्भवाच्च ।

पाशुपतमतशोधनम्—

पाशुपताः परमाणोर्जगदुपादानत्वं पशुपतेश्च निमित्तकारणतामभ्युपगच्छन्ति । तन्नोचितम् । पशुपतेश्चेतनान्तरत्वात्, वृकासुरादीनामुपत्पातेन, ब्रह्महत्यया च दुःखदर्शनात् ! श्रुत्याच-अपहतपाप्मत्वसत्यसंकल्पत्व-सत्यकामत्वविशिष्टस्येश्वरस्य जगत्कारणत्व प्रतिपादनात् । अतएव श्रुतिषु सत्शब्द वाच्यस्येश्वरस्यैव जगत अभिन्नन्निमित्तोपादानरूपा कारणताऽभ्युपेया ।

उपसंहार :-

मूलं तत्त्वत्रयं हि द्राविडमयम् । तस्य संस्कृतेवादद्वयमुपलभ्यते । एकोहि-तत्र श्रीमतांकाञ्चोप्रतिवादिभयङ्कर मठाधीश्वराणामनन्ताचार्यस्वामिनामनुवादः, अयमेव ...

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मूलरूपेण संगृहीत:; द्वितीयोऽनुवाद: श्रीवृन्दावनधाम्नि निवास रसिकाणाँ श्रीगोवर्द्धन रङ्गाचार्य स्वामिनाम् वर्तते; अयमेवानुवादोऽत्रग्रन्थे पाठभेद रूपेण संकलित:। संस्कृतव्याख्याने हिन्दी व्याख्याने चोभयत्र तथाविधोऽस्ति कृत: प्रयासो येनोभयोरपि पाठयो: सामञ्जस्यं सम्पद्यते।

सोऽयं तत्त्वत्रयग्रन्थ: सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य शास्त्रिपरीक्षायामनिवार्यसाहित्यविषयस्य द्वितीयपत्रे वैकल्पिक-ग्रन्थरूपेण निर्धारितोऽस्तीति मत्वा जनेनानेन छात्रोपयोगिन्या छात्रतोषिण्या सस्कृतव्याख्यया, तस्याअर्थबोधनानुकूलया आमोद नाम्न्या हिन्दीव्याख्यया, हिन्द्यां मूलानुवादेन च समलं कृत्य ग्रन्थमेनं प्रकाशयितुमैच्छत्। संस्कृतव्याख्यानलेखने, तस्याकरनिर्धारणे च श्री पं० रामकुमारदासमहोदयानांमाध्यक्ष्ये विद्यमानस्य आयोध्यिकमणिपर्वतस्थस्य श्रीरामग्रन्थागारस्य साहाय्यं भृशं स्वीकृतं मया। अस्य ग्रन्थस्य भूमिकालेखने बहुधा साहाय्यमारचितं तत्र श्रीमद्भिः प्रभुदास महोदयै: प्राचार्यै: आयोध्यिकश्रीहनुमत्संस्कृत महाविद्यालयस्य, भूमिकालेखनशैलीनिर्देशनादि द्वारेण। एतेषां महानुभावानामनुग्रहं, श्रीपं० रामकुमारदासमहोदयानामुत्साह-वर्द्धनं च नहि विस्मर्तुं प्रभवामि।

सत्यपिकृते प्रयासे, नूनं शिष्यन्ते प्रमादादिजन्या:; बह्व्य शुद्धय:; तज्जन्यमपराधं कृपालव: सुधियो मर्षयिष्यन्त्येवेति चार्य तुष्यति ममचेत:। यदि व्याख्ययानयाच्छात्राणांमुपकार कोऽपि जायते तदा ममप्रयासस्सफलो भविष्यतीत्यर्थयते-

विदुषामाश्रव:- शिवप्रसादद्विवेदी, श्यामसदन, कटरा, अयोध्या।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

श्रीमते रामानुजाय नमः × श्रीवादिभीकरमहागुरवे नमः ॥
श्रीमल्लोक गुरवे नमः × श्रीमद् वरवरमुनये नमः ॥
श्रीमद् विष्वक्सेनयतीन्द्राय नमः

# तत्त्वत्रयम्

## चित् प्रकरणम्

**सू० १—मुमुक्षोश्चेतनस्य मोक्षसिद्धये तत्त्वत्रय ज्ञानमावश्यकम् ।**

अनु०—मुमुक्षु जीव को मोक्ष की प्रप्ति के लिए तत्त्वत्रय का ज्ञान आवश्यक है ।

छात्र तोषिणी—विशिष्टाद्वैतिनां नये जीवानां त्रयो भेदाः स्वीक्रियन्ते—बद्ध-मुक्त-नित्या इति । जगति जननमरणचक्रे बम्भ्रम्यमाणा जीवा बद्धाः, निवृत्तसंसाराः मुक्ताः कदाप्यनाघ्रातसंसाराः शेषशेषाशनादयो नित्या इत्यभिधीयन्ते । तत्र बद्धा जीवाः शास्त्रवश्य तदवश्य भेदेन द्विधा विभज्यन्ते । शास्त्रवश्या अपि बुभुक्षु मुमुक्षु भेदात् द्वेधा भवन्ति । तत्र मोक्षेच्छया साङ्गां भक्तिं प्रपत्तिं वा स्वीकृत्य भगवदाराधनपरायणा जीवा मुमुक्षवः । मूले जीवपदमनादृत्य चेतन पद प्रयोगस्यायमभिप्रायोऽस्ति यत् चैतन्यवानेव चेतनो भवति । चैतन्यस्य च सार्थक्यं मोक्षेच्छोत्पत्तावेव भवति तां विना निरर्थकमेव चैतन्यम् । अतः पुरुषार्थचतुष्टये मोक्ष एव चरमः पुरुषार्थः । स च मोक्षो भगवत्प्राप्तिरूपः । भगवत्प्राप्तिः

---

पाठभेद १—मुमुक्षोश्चेतनस्य मोक्षोत्पत्तौ तत्त्वत्रयज्ञानमपेक्षितम् ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

संसार निवृत्तेरिच्छां विना नहि संभवति । तथा सति संसारनिवृत्तीच्छापूर्वकभगवत्प्राप्तिरूपमोक्षप्राप्तये तत्त्वत्रयस्य ज्ञानमावश्यकं भवति ।

नच—मोक्षेच्छायामेव तत्त्वत्रयज्ञानस्य कारणत्वं स्वीकर्तव्यम् नतु मोक्षसिद्धाविति वाच्यम् । 'परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' ( मु०उ० १।२।१२ )

तथा—'जायमानं हि पुरुषं य पश्येन् मधुसूदनः

सात्विकः स तु विज्ञयः स वै मोक्षार्थचिन्तकः ।''

इत्यादि श्रौतस्मार्तवाक्यैर्ज्ञायते यत् तत्त्वज्ञानं विनापि मोक्षेच्छा जायते । किन्तु मोक्षसिद्धये तु तत्त्वज्ञानमावश्यकम् ।

न च मोक्षसिद्धौ तत्त्वज्ञानस्य कारणता स्वीकारे—

'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः

तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ।

यं यं स्पृशति पाणिभ्यां य यं पश्यति चक्षुषा'

स्थावराण्यपि मुच्यन्ते किम्पुनर्बान्धवा जनाः ।''

इति वैष्णवसंबन्धमात्रेण मोक्षसिद्धिप्रतिपादकानि शास्त्राणि व्यर्थानि स्युरिति वाच्यम्; प्रकृते तु मोक्षसिद्धये तत्त्वज्ञानस्यानियतता प्रतिपादिता अनेन ज्ञानीवैष्णवजनसंबन्धाभिमानमात्रेण सिद्धिर्व्याहता नो भवति । फलतः मोक्षसिद्धौ तत्त्वत्रयज्ञानस्य नित्याङ्गत्वमव्याहतम् ।

आमोद—विशिष्टाद्वैत सिद्धान्त में जीवों के तीन भेद स्वीकार किये जाते है; बद्ध, मुक्त, और नित्य । संसार के जन्म-

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मरण चक्र में सदा घूमते रहने वाले जीव, बद्ध शब्द से अभिहित किये जाते हैं। ऐसे जीवों में ब्रह्मा से लेकर स्तम्ब ( तृण ) पर्यन्त तक के जीव आते हैं! मुक्त जीव वे हैं जो श्रवण-मनन-निदिध्यासन के माध्यम से परमात्मा का तैलधारावदविच्छिन्न-स्मृति सन्तान के द्वारा परमात्मा के स्वरूप याथात्म्य का साक्षात्कार करके इस संसार के बन्धन को तोड़ चुके हैं। जो जीव कभी भी इस संसार चक्र में पड़ते ही नहीं हैं; वे शेष शेषाशान (गरुड) आदि नित्य जीव हैं।

बद्ध जीवों के भी दो भेद स्वीकार किये जाते हैं-शास्त्रवश्य तथा शास्त्रावश्य। शास्त्रवश्य हम मानव मात्र है तथा मनुष्य को छोड़कर पशु-पक्षी आदि शास्त्रावश्य जीव माने जाते हैं। शास्त्र-वश्य जीव भी बुभुक्षु और मुमुक्षु इन दो भागों में विभक्त किये जाते हैं। भोग की इच्छा करने वाले त्रिवर्ग ( धर्म, अर्थ एवं काम ) परायण, जीव बुभुक्षु कहलाते हैं। मोक्ष की इच्छा से साङ्गभक्ति को अपनाकर परमात्मा की आराधना करने वाले अथवा प्रपत्ति को अपनाने वाले जीव मुमुक्षु कहलाते हैं।

मूल में मुमुक्षु पद विशेषण हैं और चेतन पद विशेष्य। श्री लोकाचार्य स्वामी ने जीव पद का प्रयोग न करके चेतन पद का प्रयोग इसलिए किया है कि चैतन्यवान् को ही चेतन कहते हैं और चेतन्य की इसी में सार्थकता है कि उसके द्वारा परम पुरुषार्थं मोक्ष की प्राप्ति की इच्छा हो उसके बिना चेतन्य ही निरर्थक है। मोक्ष को विशिष्टाद्वैत सिद्धान्त में भगवत्प्राप्ति

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

माना जाता है। भगवत्प्राप्ति संसार की निवृत्ति की इच्छा के बिना हो नहीं सकती है; अतएव संसार की निवृत्ति की इच्छा पूर्वक भगवत्प्राप्ति के लिए तत्वत्रय का ज्ञान होना आवश्यक है, यह इस मूल वाक्य का भावार्थ हुआ।

शंका:—तत्वत्रय का ज्ञान हुए बिना तो मोक्ष प्राप्ति की इच्छा ही नहीं हो सकती है, अतएव मोक्षकी इच्छा का ही कारण तत्त्वत्रय का ज्ञान मानना चाहिये, मोक्ष की प्राप्ति का नहीं।

समाधान– परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' यह वाक्य बतलाता है कि कर्मार्जित लोकों; ( पुत्र,मित्र, कलत्र धन, सम्पत्ति आदि ) की नश्वरता की परीक्षा करके ज्ञानी पुरुष ...सार से निर्विण्ण ( उदास ) हो जाता है। ऐसे ही– 'जायमानं ... पुरुषम्' इत्यादि वाक्य बतलाते हैं कि उत्पन्न होते समय ...वान जिसको कृपापूर्णदृष्टि से देखते हैं वह पुरुष सात्त्विक ...ति वाला तथा मोक्ष नामक पुरुषार्थ की प्राप्ति की चिन्ता वाला होता है।'

...र्थ इन वाक्यों से सिद्ध होता है कि तत्त्वत्रय के ज्ञान के बिना ...राधीन मोक्ष की इच्छा उत्पन्न होती है। इस तरह मुमुक्षा में ...मीत्रय की कारणता अन्यथासिद्ध होने के कारण तत्त्वत्रय विशिष्टो मोक्षोत्पत्ति का ही कारण मानना चाहिये।

...शंका–तत्त्वत्रय ज्ञान को मोक्ष प्राप्ति का कारण मानने पर ...उक्त शास्त्रवाक्य व्यर्थ हो जायेंगे–

... पशुर्मनुष्यः पक्षी वा इत्यादि—

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अर्थात् वैष्णवों के आश्रय में रहने मात्र से ही वैष्णवाश्रित पशु, मनुष्य तथा पक्षी भी भगवान् विष्णु के प्रख्यात परम पद (वैकुण्ठ) को प्राप्त कर लेते हैं। वैष्णव अपने हाथों से जिसे स्पर्श करता है, जिसे अपने नेत्रों से देखता है, वे स्थावर भी मुक्त हो जाते हैं, श्रीवैष्णव के बान्धवों के विषय में क्या कहना ?

इन वाक्यों में श्रीवैष्णव के सम्बन्ध मात्र से ही मोक्ष की प्राप्ति बतलायी गयी है ? समाधान प्रकृत में तो मुमुक्षु जीव के मोक्षप्राप्ति का कारण तत्त्वत्रय का ज्ञान बतलाया गया है इससे श्रीवैष्णव संबन्धाभिमानी जीवों के मोक्ष प्राप्ति में कोई बाधा नहीं होती है। अतएव तत्त्वत्रय का ज्ञान मोक्षप्राप्ति का अव्याहत कारण है।

इदानीं तत्त्वत्रयमुपदिशति–

मू०—तत्त्वत्रयं नाम-चिदचिदीश्वरश्च ।

अनु०—चित् ( जीवात्मा ) अचित् ( प्रकृति ) तथा ईश्वर को तत्त्वत्रय कहते हैं।

छा०तो–जीवप्रकृतीश्वराणां समुदितं नाम तत्त्वत्रयमित्यर्थः। एतेषां स्वरूपज्ञानमावश्यकं भवति मोक्षसिद्धये। ननु 'तमेव विद्वानमृत इह भवति' इति श्रुत्या ज्ञायते यत् ईश्वरस्वरूपज्ञानेनैव मोक्षसिद्धिर्भवति अतः तद्व्यतिरिक्तयोः चिदचिदोः स्वरूपज्ञानमन्यथासिद्धम् इति चेन्न–चिदचिदोः स्वरूपज्ञानं विनेश्वर

पाठभेद–तत्त्वत्रयं चिदचिदीश्वरश्च ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

स्वेतर समस्त वस्तु वैलक्षण्यज्ञानमखिलहेयप्रत्यनीकत्वं जगतोऽभिन्ननिमित्तोपादानकारणत्वं सकलजगच्छरीरत्वञ्च ज्ञातुं नहि शक्यते। ईश्वरस्य सकलजगच्छेषित्व-धारकत्व-नियामकत्वरूपार्थज्ञानेनैव हि मोक्षसिद्धिः इत्थं हि चिदचिदोर्ज्ञानस्येश्वरज्ञाने प्रयोजकतया तयोरपिज्ञानमावश्यकम्। तथैव हि प्रतिपादयन्ति श्रुतयः- "पृथगात्मानं प्रेरितारञ्चमत्वा जुष्टस्ततस्तेनामृतत्वमेति।' (श्वेता० १।६) इत्यादिकाः।

आमोद- जीवात्मा, प्रकृति और ईश्वर इन तीनों का समुदित नाम तत्त्वत्रय है। इन तीनों के ही ज्ञान को तत्त्वत्रय ज्ञान कहते हैं। मोक्षकी प्राप्ति के लिए इन तीनों का ही ज्ञान आवश्यक होता है। शंका- 'तमेवं विद्वानमृत इह भवति नान्यः पन्थाविद्यतेऽयनाय।' अर्थात् उपर्युक्त (पुरुषसूक्त एवं उत्तरानुवाक् में वर्णित) पुरुष की इस प्रकार से उपासना करके ही उपासक इस लोक में ही अमृत हो जाता है. मोक्ष प्राप्ति का कोई दूसरा मार्ग नहीं है। इस श्रुति से ज्ञात होता है कि ईश्वर के ही वास्तविक स्वरूप को जान लेने से मुक्ति मिलजाती है, अतएव ग्रन्थकार ने मोक्षप्राप्ति के लिए आवश्यक तत्त्वत्रय का ज्ञान बैलाकर जीवात्मा एवं प्रकृति के स्वरूप के ज्ञान की आवश्यकता नावश्यक रूप से बतलाया है क्योंकि मोक्षकी प्राप्ति तो ईश्वर ही स्वरूप ज्ञान से हो जाती है।

समाधान-जबतक जीव तथा प्रकृति के स्वरूप का ज्ञान ठीक-ठीक नहीं होगा तब तक यह जाना ही नहीं जा सकता है

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

कि ईश्वर ही इस सम्पूर्ण संसार के अभिन्ननिमित्तोपादान कारण हैं। अखिलहेयप्रत्यनीक तथा सकल कल्याणगुणसागर होने के कारण परमात्मा स्वतेर समस्त वस्तु विलक्षण तत्त्व हैं। तथा सारा जगत् उनका शरीर है और वे सम्पूर्ण जगत् की आत्मा हैं। परमात्मा का शरीर होने के कारण सम्पूर्ण जड़ चेतनात्मक जगत् उनका नियाम्य, धार्य और शेष है एवं परमात्मा इस जगत के एकमात्र नियामक, धारक एवं शेषी हैं। परमात्मा के इसी स्वरूप का प्रतिपादन वेदान्त वाक्य करते हैं और परमात्मा का यही ज्ञान मोक्षसिद्धि का साधकतम है। किन्तु परमात्मा के इस स्वरूप का ज्ञान तब ही संभव है, जब कि जीव और प्रकृति के भो स्वरूप को ठीक-ठी[illegible] जाना जाय। अतः मोक्ष सिद्धि के लिए तत्त्वत्रय का ज्[illegible] आवश्यक है यही मानना ,चाहिए। इसी अर्थ का सम[illegible] 'भोक्ता भोग्य प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' अ[illegible] भोक्ता ( जीव ) भोग्य ( प्रकृति ) एवं नियामक परमात्मत[illegible] को पृथक्-पृथक् जानकर जीव परमात्मा की प्रीत का [illegible] बन जाता है और उसी से वह मोक्ष को प्राप्त कर लेता [illegible] इत्यादि श्रुतियां करती हैं।

चिच्छब्दार्थमाह–

चित् शब्द का अर्थ बतलाते हुए ग्रन्थकार कहते हैं–

मू०–चित् इति आत्मोच्यते।

पाठभेद–चिदित्यात्मोच्यते।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अनु०—चित् शब्द से आत्मा का अभिधान होता है।

छा० तो०—चित् शब्दः 'प्रेक्षोपलब्धिश्चित् संवित् प्रतिपज्ज्ञप्तिचेतना' इतिकोशप्रमाणेन साक्षाज्ज्ञानस्य वाचकः, अथाप्यत्र तत्त्वत्रयप्रकरणे चेतनस्यैव वाचक इत्याह-चिदित्यात्मोच्यते' इति। आत्मा शब्दः जीवस्य वाचकः—'क्षरात्मानावीशते देव एकः' ( ना० प० १।६।+श्वे० १।१० ) 'आत्मा ज्ञानमयोऽमलः' इत्यादिभिः श्रुतिभिर्ज्ञायते।

मध्यवीथी भट्टार्यकृष्णपादप्रभृतयः अचित् तत्त्वमुपक्रम्य तत्त्वत्रयमभिदधुः। तेषामयमभिप्रायः—प्रकृतेर्ज्ञानाभावे आत्मनः प्रकृतेः परत्वज्ञानासम्भवात् प्रथमतः प्रकृतिं ज्ञात्वाऽनन्तरं तदन्तर्तीनमात्मानं ततस्तयोर्नियामकस्येश्वरस्यज्ञानं सम्पादनीयम्। स्यक्रमस्यानुगुणा श्रुतिः—"क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावी-ते देव एकः" इत्यादिका।

चित्तत्वमुपक्रम्य तत्त्वत्रयमुपदिशतो लोकाचार्यस्याभिप्रायो-स्ति यत् अचित्तत्त्वस्यहेयतया ज्ञातव्यत्वात्, ईश्वरस्य च तदुपा-तया ज्ञातव्यत्वात् उभयोरपितत्त्वयोर्ज्ञातुरधिकारिणश्चेतनस्य पं प्रथमं ज्ञातव्यमिति। अस्यक्रमस्योपदेशिका च श्रुतिः—ा भोग्यंप्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्त्वमेति ( श्वे० ) इत्यादिका। तस्मात् क्रमद्वयंच वेदान्तसिद्धम्।

चित् तत्त्वमुपक्रम्य तत्त्वत्रयोपदेशं कुर्वन्ति दीश्वरतत्त्वभाव' ( स्तोत्ररत्न ७ ) इत्यादिना यामुना-

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

चार्याः, 'अशेष चिदचिद्वस्तुशेषिणे' ( वे० सं० १) इत्यादिना श्री भाष्यकाराश्च ।

आमोदः-'प्रेक्षोपलब्धिश्चित् संवित् प्रतिपज्ज्ञप्ति चेतना' इस कोशप्रमाण के अनुसार यद्यपि चित् शब्द साक्षात् ज्ञान का वाचक है। किन्तु इस तत्त्वत्रय के प्रकरण में वह ज्ञाश्रय आत्मा का वाचक है इस अर्थ को बतलाते हुए श्रीलोकाचार्य स्वामी कहते हैं-चित् शब्द आत्मा का वाचक है। इस वाक्य में चेतन शब्द का प्रयोग न करके आत्मा शब्द का प्रयोग करने का अभिप्राय यह है कि 'क्षरात्मानावीशते देव एकः' 'आत्माज्ञान मयोऽमलः' इत्यादि श्रुतियों में आत्मा शब्द जीव के अर्थ में प्रसिद्ध है। अतएव यहां भी वह जीवार्थक है, इस अर्थ को बतलाने के लिए चित् शब्द का प्रयोग हुआ है।

मध्य वीथीभट्टारक कृष्णपाद स्वामी प्रभृति आचार्यों ने अचित् तत्त्व से प्रारम्भ करके तत्त्वत्रय का उपदेश दिया है। उन आचार्यों के क्रम का प्रतिपादक-'क्षरात्मानावीशते देव एकः' अर्थात् प्रकृति तथा जीव का नियामक दिव्य गुणवान् एक ईश्वर ही है। इन आचार्यों का अभिप्राय है कि-प्रकृति तत्त्व का ज्ञान हुए बिना यह ज्ञान नहीं हो सकता है कि ईश्वर आत्मा और प्रकृति अपेक्षा श्रेष्ठ तत्त्व है। सर्व प्रथम प्रकृति को जानकर तदनन्तर उसके अन्तर्वर्ती आत्मा को जानने के पश्चात् उन दोनों के नियामक परमात्मा के स्वरूप को जानना चाहिये।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

चित् तत्त्व से प्रारम्भ करके तत्त्वत्रय का उपदेश करने वाले श्रीलोकाचार्य स्वामी का अभिप्राय है कि चूँकि अचित् तत्त्व को हेय रूप से जानना चाहिए तथा ईश्वर तत्त्व को उपादेय रूप से जानना चाहिए; अतएव सर्वप्रथम उन दोनों प्रकार के ज्ञानों के अधिकारी जीवात्मा के ही स्वरूप को जानना चाहिए चित् तत्त्व से उपक्रान्त तत्त्वत्रय के उपदेश में–'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' अर्थात् जीव प्रकृति तथा नियामक परमात्मा का मनन करके' प्रभृति श्रुतियां प्रमाण हैं। इस तरह दोनों प्रकार के उपदेशक्रम वेदान्तसिद्ध हैं। किन्तु श्रीविशिष्टाद्वैत सिद्धान्त के प्रवर्तक आचार्यों ने चित् तत्त्वोपक्रान्त ही तत्त्वत्रय के उपदेश को वरीयता दी है। उदाहरणार्थं श्रीयामुनाचार्य स्तोत्ररत्न में कहते हैं–चित् अचित् तथा ईश्वर इन तीनों के स्वरूप तथा स्वभाव का' इसी तरह श्री भाष्यकार रामानुजाचार्य कहते हैं– 'अशेषचिदचिद्वस्तुशेषिणे।' ( वेदार्थ सं० १ ) अर्थात् सम्पूर्ण चेतनाचेतनपदार्थों के स्वामी के लिए'–अतएव श्रीलोकाचार्य स्वामी ने भी–चित् तत्त्वोपक्रान्त तत्त्वत्रयोपदेशपद्धति को अपनाया है।

उद्देशो लक्षणं परीक्षा चेति तत्त्वनिर्णयक्रमः। तत्र सर्वप्रथमं तत्त्वत्रयमुद्दिश्य उद्देशक्रमेण चिच्छब्दार्थस्यात्मनस्स्वरूपमाह–

तत्त्वों के निर्णय का क्रम है कि सर्व प्रथम उसका नाम

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

निर्देश जाता किया है। पुनः निर्दिष्टवस्तु का स्वरूपनिरूपक धर्म ( लक्षण ) बतलाया जाता है और अन्त में इस बात की जाँच की जाती है कि उक्त लक्षण में अव्याप्ति, अतिव्याप्ति और असंभव इन तीनों में से कोई दोष तो नहीं है। श्रीलोकाचार्य स्वामी ने भी दूसरे वाक्य में तत्त्वत्रय का उद्देश करके; उद्दिष्ट क्रम से सर्वप्रथम चित् शब्द के अर्थभूत आत्मा का स्वरूप-लक्षण बतलाते हैं-

**सू०-आत्मस्वरूपम्-'शेन्नु शेन्नु परम्परमाय्' इत्युक्त प्रकारेण देहेन्द्रियमनःप्राणबुद्धिविलक्षणम् अजडम् आनन्द-रूपं नित्यं अणु अव्यक्तम् अचिन्त्यं निरवयवं निर्विकार ज्ञानाश्रयभूतम् ईश्वरस्य नियाम्यं धार्यं शेष भूतं च ।५**

अनु०-आत्मा का स्वरूप-'शेन्नु-शेन्नु परम्परमाय्' गी० ८।१०।५ ) इस गाथा के अनुसार देह, इन्द्रिय, मन, प्र और ज्ञान से विलक्षण, अजड, आनन्दस्वरूप, नित्य, अणु प माण वाला, अव्यक्त, अचिन्त्य, निरवयव, निर्विकार, ज्ञान आश्रय तथा ईश्वर का नियाम्य, धार्य तथा शेष है।

छा० तो०-अस्मिन् लक्षणे भागद्वयमस्ति-परमत आत्मनः स्वरूपञ्च। प्राणबुद्धिविलक्षणम् इत्यन्तं परमत ...

पाठभेद-आत्मास्वरूपं गत्वागत्वोत्तरोत्तरमित्युक्त देहेन्द्रियमनः प्राणवृत्तिभ्यो विलक्षणमजडमानन्दरूपं नित्यमण्वव्यक्तमचि-न्त्यं निरवयवं निर्विकारं ज्ञानाश्रय ईश्वरस्य नियाम्यं धार्यं शेष-

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अजडमारभ्य शेषभुतञ्चेत्यन्तं आत्मनः स्वरूपम् । तत्र 'देहेन्द्रियमनः प्राणबुद्धिविलक्षणम्' इति समस्तं पदम् । द्वान्द्वान्ते विद्यमानत्वात् विलक्षणमिति पदं प्रत्येकेनाभिसंबद्ध्यते । तथाहि सति–देहविलक्षणम्, इन्द्रियविलक्षणम्, मनोविलक्षणम्, प्राणविलक्षणम्, बुद्धिविलक्षणम् चात्मस्वरूपमित्यर्थाः निस्सरन्ति । देहेन्द्रिय मनः प्राणबुद्धिभ्योवैलक्षण्यप्रतिपादनस्य मूलमाह-शेन्नु-शेन्नु परम्परमाय्' ( स०गी० ८।८।५ ) इत्यादिकां शठकोपसूरेः गाथाम् । अस्यां गाथायां श्रीसूरिः देहेन्द्रियादिभ्य' उत्कृष्टतांमात्मनः । प्रतिपादितवान् ! उत्कृष्टत्वादेवात्मा देहेन्द्रियादिभ्यो भिद्यते । ग्रन्थकारः देहविलक्षणमित्युक्त्वा देहात्मवादिनां चार्वाकाणां मत; इन्द्रियविलक्षणमित्युक्त्वा इन्द्रियात्मवादिनां चार्वाकाणां मतम्, मनोविलक्षणमित्युक्त्वा मन आत्मवादिनां मतम्, प्राणविलक्षणमित्यनेन प्राणात्मवादिनां चार्वाकाणां मतम्, बुद्धिविलक्षणमित्युक्त्वा तन्त्रेणबौद्धानाम्प्रच्छन्नबौद्धानाञ्च मतम् निराकरोति । इत्थं परेषांमतम् निराकृत्य आत्मनः विशिष्टाद्वैत सिद्धान्तानुकूलं स्वरूपमाह–अजडमित्यारभ्य शेषभूतञ्चेत्यन्तम् ।

आत्मसिद्धिकाराः श्रीमद्यामुनाचार्या अप्याहुः–देहेन्द्रियमनः प्राणधीभ्योन्योनन्यलक्षणः नित्यो व्यापी प्रतिक्षेत्रमात्माभिन्नः स्वतः सुखी ॥ ( आ० सि० ३ )

आमोदः–आत्मा के इस लक्षण वाक्य के दो अंश है–दूसरे वादियों के मत का खण्डन तथा अपने सिद्धा-

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

न्तानुसार आत्मा के स्वरूप का प्रतिपादन। 'आत्मस्वरूपम्' से लेकर-'विलक्षणम्' पर्यन्त दूसरे वादियों के मत का खण्डन किया गया हैं। 'अजडम्' से लेकर 'शेषभूतञ्च' पर्यन्त अपने सिद्धान्तनुाकूल आत्मा का स्वरूप बतलाया गया है। इस वाक्य का 'देहेन्द्रियमनःप्राणवुद्धिविलक्षणम्' पद समस्त पद है। इस वाक्य का विग्रह इस प्रकार है। "देहश्च, इन्द्रियाणि च, मन। श्च, प्राणाश्च, बुद्धिश्च देहेन्द्रियमनःप्राणबुद्धयः तेश्योविलक्षणम् देहेन्द्रियमनःप्राणवुद्धिविलक्षणम्'। इस तरह इसपद का अर्थ होता है कि आत्मा का स्वरूप देह इन्द्रिय, मन, प्राण और ज्ञान से विलक्षण है। ग्रन्थकार ने अपने इस कथन को साधार सिद्ध करते हुए श्रीशठकोपसूरि प्रणीत सहस्रगीति की (स०गीं०८।८।५गाथा, "शेन्नु शेन्नु परम्परमाय्" गाथा को उद्घृत किया है। इस गाथा में श्री सूरि ने आत्मा को देह इन्द्रिय आदि से उत्कृष्ट बतलाकर देहादि से आत्मा को विलक्षण बतलाया है।

ग्रन्थकार ने देह से विलक्षण आत्मा के स्वरूप को बतलाकर देहात्मवादी चार्वाकों के मत का; इन्द्रियों से विलक्षण आत्मा के स्वरूप को बतलाकर इन्द्रियात्मवादी चार्वाकों के मत का; मन से भिन्न आत्मा के स्वरूप को बतलाकर मन आत्मवादी चार्वाकों के मत का; प्राण से भिन्न आत्मा के स्वरूप को बतलाकर प्राणआत्मवादी चार्वाकों के मत का तथा बुद्धि से भिन्न आत्मा के स्वरूप को बतलाकर एक साथ ही ज्ञानात्मवा

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

बौद्धों तथा ज्ञानमात्रात्मवादी अद्वैती विद्वानों के मत का; खण्डन किया है।

इसके पश्चात् ग्रन्थकार ने वाक्य के शेष अंश के द्वारा आत्मा का स्वरूप बतलाते हुए उसे अजड, आनन्दस्वरूप, नित्य, अणुपरिमाण वाला, अव्यक्त, अचिन्त्य, निरवयव, निर्विकार, ज्ञानवान् तथा परमात्मा का नियाम्य, धार्य एवं शेष बतलाया है।

चूँकि स्वरूप लक्षण घटक सभी पदों की व्याख्या स्वय ग्रन्थकार करेंगे अतएव यहां उनकी व्याख्या अनावश्यक होगी।

५—आत्मस्वरूपस्य देहादिविलक्षणत्वं कथमिति चेत् इत्थम्।

अनु०—यदि कोई पूछे कि आत्मा का स्वरूप देहादि से विलक्षण कैसे है तो ( इसका उत्तर है- ) इस तरह ( निम्नोक्तप्रकारसे )

छा०तो०—नहि प्रतिज्ञामात्रेण अपि तु लक्षणप्रमाणाभ्याम् वस्तुसिद्धिः, इति नियमानुसारेण आत्मनो देहादिविलक्षणरूपे केनचित् प्रमाणेन भाव्यम्। तच्च प्रमाणं किमिति चेदुच्यते

दीप्येद—शंका—केवल प्रतिज्ञा करदेने मात्र से ही वस्तु की सिद्धि नहीं होती है, अपितु उसके लिये वस्तु के लक्षण और प्रमाण की अपेक्षा होती है। अतएव आत्मा के देहादि विलक्षणत्व की

पाठभेद ५—आत्मस्वरूपं कथं देहादिविलक्षणमिति चेत्।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

सिद्धि के लिये किसी प्रमाण का होना अत्यन्त अपेक्षित है। वह प्रमाण कौन सा हैं ?

समा—आत्मा के देहादिभिन्नत्व की सिद्धि के लिये निम्नांकित प्रमाण उपस्थित किये जा रहे हैं।

देहादीनाँ आत्मविलक्षणत्वेयुक्तीः प्रस्तौति । देह आदि के आत्म से भिन्न सिद्ध करने के लिये युक्तियां प्रस्तुत करते हैं।

६—देहादीनाम् 'मम देहादय' इति आत्मनो भिन्नतया भानात्, इदंत्वेन भानात्, आत्मनश्च अहंत्वेनभासमानत्वात्, एतेषां कदाचिद्भासमानत्वात्, कदाचिदभानाच्च, आत्मनस्सदाभासमानत्वाच्च, एतेषां बहुत्वात्, आत्मन एकत्वाच्च एतेभ्यो विलक्षण आत्मेत्यङ्गीकर्तव्यम् ।

अनु०—देह आदि को 'मेरे देह आदि हैं' इस रूप से आत्मा से भिन्नता की प्रतीति होने, यह-यह इस रूप से प्रतीत होने और आत्मा के मैं-मैं' इस रूप से प्रतीत होने-इन सबों की कभी प्रतीति होने और कभी नहीं प्रतीति होने तथा आत्मा की प्रतीति सदा होते रहने, इन सबों (देहादि) के अनेक हो तथा आत्मा के एक होने से, स्वीकार करना चाहिये कि आ इन सबों से भिन्न है।

पाठभेद६- देहादीनां मम देहादिकमिति आत्मनः पृथगुपलभ्यमा इदमित्युपलभ्यमानत्वात् आत्मनोऽहमित्युपलम्भात्, आत्मनः सर्वदोपलम्भ एतेषामनेकत्वादात्मन एकत्वादात्मैतेभ्यो विलक्षणः स्वीकार्यः ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

छा० तो०—यद्यपि आत्मसिद्धिग्रन्थे श्रीभाष्ये च पृथक्-पृथक् देहादीनामात्मत्वं विस्तरेण खण्डितम्, परञ्च ग्रन्थविस्तारभिया-तदखिलं परित्यज्य युक्तीनां त्रयं नवीन प्रस्तौति ग्रन्थकारः येन देहादिकेभ्य आत्माव्यतिरिच्यते। तत्र प्रथमा युक्तिः वर्तते यत्-आत्मा सदा अहमहमित्याकारेण प्रतीयते परञ्च, देहादिकाः 'मम-देहः, ममेन्द्रियाणि, ममभनः, ममप्राणाः इत्यादि रूपेण सदा आत्माश्रितत्वेन इदं शरीरम् इमानीन्द्रियाणि, इत्यादिरूपेण इदंत्वेन च प्रतीयन्ते, अतएव प्रतीत्याकारभेदात् उभयोर्भेदः सिद्धयति। देहा-दिकाः सर्वदा नो भासन्ते, कदाचिद् ( जग्रद्दशायाम् स्थूलोऽह'म्' त्यादिरूपेणोपलभ्यन्ते, कदाचित् ( सुषु'प्त्यादौ ) च तथा नोपल-यन्ते। आत्मनश्च सदोपलम्भो भवतीति भिद्यते देहादिभ्य आत्मा। थवा जन्ममरणभाक्त्वेन देहादीनां कदाचिदुपलब्धिः कदाचिच्चा-नुपलब्धिः आत्मनश्चनित्यत्वात् सर्वदोपलब्धिर्भवति। एवमेव क्षुरादिरूपेणोपलभ्यमानानीन्द्रियाणि आन्ध्यबाधिर्यादौ संजाते पलभ्यन्ते। संकल्पादि हेतुतयोपलभ्यमानं मनो मूढावस्थायां-लभ्यते, मोहाद्यवस्थायामुच्छ्वासनिःश्वासरूपेणोपलभ्यमानानां नामुपलब्धिर्नहि भवति, ज्ञानमपि विषयाग्रहणवेलायाम् नानु-आत्मा च नित्यत्वान्नहि म्रियते। चक्षुः श्रोत्राभ्यां न्नः इदानीमन्धो जातः बधिरो जातः, किञ्च प्राक् सुविशद-कोऽहमिदानीं न किञ्चिज्जानामि, तदानीमहं निष्प्राणः नीं सप्राणोजातो मम प्राग्ज्ञानमजनि; इदानीं नष्टमित्यादिप्रका

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

गन्ध, स्पर्श और शब्द ) का कार्यों में सन्निवेश करके किया है। मनुस्मृति के "मनोबुद्धिरहंकारः' इत्यादि प्रघट्टक में मन शब्द से मन्तव्य प्रकृति को तथा संकल्प शब्द से उसके कारण भूत मन को लक्षित किया गया है। अतएव पञ्चमहाभूतों को कार्य ही मानना चाहिये कारण नहीं।

सू०-२८ तन्मात्राणि नाम भूतानां सूक्ष्मावस्था।

अनु०-भूतों की सूक्ष्मावस्था को तन्मात्रा कहते हैं।

छा०तो-भूतानां सूक्ष्मावस्थैव तन्मात्रशब्देनाभिधीयते। अस्यामवस्थायां भूतानि 'शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः' (वि०।०२।२।५० ) इति सूक्तयुक्तः, शान्तत्वयोरत्वमूढत्वरूपौर्विशेषेरहितानि। स्वस्वरूपनिरूपक धर्मेण" व युक्तानि भवन्ति। तथाहि-शब्दमात्रगुणकआकाशः शब्दतन्मात्रम्,। स्पर्शमात्रगुणकोवायुः स्पर्शतन्मात्रम्, रूपमात्रगुणकं तेजः रूपतन्मात्रम्। रसमात्रगुणकं जलम् रसतन्मात्रं, गन्धमात्रगुणवती पृथिवी गन्धतन्मात्रमिति च प्रोच्यते। तथा चोक्तम्-'तस्मिंस्तस्मिस्तुतन्मात्रं तेन तन्मात्रता स्मृता। तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते।

अमाद०-भूतों की सूक्ष्मावस्था ही तन्मात्रशब्द से अभिहित की जाती है। इस अवस्था में पञ्चमहाभूत शान्त, घोर और मूढ़ ये भूतों को विशेषताएँ हैं। इस सूक्ति में कथित शांतत्व घोरत्व एवं मूढ़त्व रूप अवस्थाओं से रहित, तथा केवल अपने स्वरूप निरूपक गुण से युक्त होते हैं। कहने का आशय है कि केवल शब्दगुण वाला आकाश शब्दतन्मात्रा, केवल स्पर्शगुण युक्त वायु स्पर्शतन्मात्रा, केवलरूप गुणयुक्त तेज रूपतन्मात्रा, केवल

पाठभेद-तन्मात्राणि भूतानां सूक्ष्मावस्था।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

रसगुणयुक्त जल रसतन्मात्रा तथा केवल गन्धगुणयुक्त पृथिवी गन्धतन्मात्रा कही जाती है। कहा भी गया है-शब्दादि तत्-तत् तन्मात्राओं में चूंकि शब्दादि एक ही गुण रहते हैं, अतएव वे तन्मात्र शब्द से अभिहित किये जाते हैं।

**मूल २९-राजसाहंकारस्त्वन्ययोर्द्वयोरहङ्कारयोः स्वस्व-कार्योत्पादनसमये सहकारीभवति।**

अनु०-राजसाहंकार तो अन्य दो अहकारों (सात्त्विक एवं तामस) के अपने-अपने कार्य के उत्पादनकाल में सहकारी होता है।

छा० तो०-यथा अङ्कुरोत्पत्तौ जलम् बीजस्य, सहकारी भवति यथावा ज्वलने वायुरग्नेः सहकारी भवति तथैव सत्त्वतमोभ्यां: इन्द्रियाणाम्भूतानाञ्चोत्पत्तौ रजोगुणः सहकारो भवति। अत्रास्य सहकारित्वञ्च-तमोंशस्य सत्त्वांशस्य च रजसाप्रेरकत्वम्।

आमोद-जिस तरह अंकुर की उत्पत्ति में जल बीज का तथा जलने में वायु अग्नि का सहकारी होता है; उसीप्रकार इन्द्रियों तथा भूतों की उत्पत्ति में रजोगुण सत्त्वांश तथा तमोंश को रजस् के द्वारा प्रेरित करके सहकारी होता है।

---

पाठभेद २९-अन्याभ्यामहङ्कारभ्यां स्वकार्यजनने राजसाहङ्कारः सहकारी भवति।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मूल ३०—सात्त्विकाहंकारः क्रमेण शब्दतन्मात्रादीनां सहकारेण श्रोत्रादिज्ञानेन्द्रियाणि वागादिकर्मेन्द्रियाणि च सृजति । तत्सहंकारं विनैव च मनस्सृजति ।

अनु०—क्रमशः शब्दतन्मात्रा आदि की सहायता से सात्त्विकाहंकार श्रोत्रआदि ज्ञानेन्द्रियों को तथा वाक् आदि कर्मेन्द्रियों को उत्पन्न करता है तथा उसकी सहायता के विना ही मन को उत्पन्न करता है ।

छा० तो०—अत्रेन्द्रियाणामुत्पत्तिक्रममाह—सात्त्विकाहंकार इत्यादिना—तथाहि—सात्त्विकाहंकार इन्द्रियोत्पादनकाले शब्दतन्मात्रसाहाय्येन श्रोत्रम्, स्पर्शतन्मात्रसाहाय्येनत्वचम् रूपतन्मात्रसाहाय्येन चक्षुः, रसतन्मात्रसाहाय्येनापः, गन्धतन्मात्रसाहाय्येन च पृथिवीं सृजति । तेषां-तेषां तन्मात्राणां साहाय्यप्रयोजनञ्चास्ति यत् श्रोत्रेन्द्रियं शब्दमेव, त्वगिन्द्रियम् स्पर्शमेव, चक्षुरिन्द्रियं रूपमेव रसनेन्द्रियंरसमेवघ्राणेन्द्रियञ्चगन्धमेव गृह्णीत । एवमेव श्रोत्रेन्द्रियसाहाय्येन वाचम्, त्वगिन्द्रियसाहाय्येन पाणिम्, चक्षुरिन्द्रियसाहाय्येन पादम्, रसनेन्द्रियसाहाय्येनोपस्थम्, घ्राणेन्द्रियसाहाय्येन च पायुं सृजति । कर्मेन्द्रियाणांज्ञानेन्द्रियाणाञ्चसहकारि मनः सहकारिणं विनैव सृजतीति तत्त्वविदो वदन्ति ।

---

पाठभेद ३०—सात्त्विकाहङ्कारः शब्दतन्मात्रादिपञ्चकं सह कार्यीसाद्य श्रोत्रादि ज्ञानेन्द्रियाणि पञ्च सृजति, तानि सहकार्यीसाद्य वागादिकर्मेन्द्रियाणि पञ्च सृजति, सहकारिणं विना स्वयमेव मनः सृजतीति वदन्ति ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

आमोद-इस वाक्य में सात्त्विकाऽहंकारः इत्यादि वाक्य के द्वारा ग्रन्थकार इन्द्रियों की उत्पत्ति का क्रम बतला रहे हैं। वह इस प्रकार से है-इन्द्रियों को उत्पन्न करते समय सात्त्विकाहंकार शब्दतन्मात्रा की सहायता से श्रोत्र को, स्पर्शतन्मात्रा की सहायता से त्वगिन्द्रिय को, रूपतन्मात्रा की सहायता से चक्षुरिन्द्रिय को, रसतन्मात्रा की सहायता से रसनेन्द्रिय को तथा गन्धतन्मात्रा की सहायता से घ्राणेन्द्रिय की रचना करता है। ज्ञानेन्द्रियों की उत्पत्ति में तन्मात्राओं की सहायता का प्रयोजन है कि श्रोत्रेन्द्रियशब्दको ही, त्वगिन्द्रिय स्पर्श को ही, चक्षुरिन्द्रियरूपको ही, रसनेन्द्रिय रस को ही तथा घ्राणेन्द्रिय गन्ध को ही ग्रहण करे। इसी तरह पुनः श्रोत्रेन्द्रिय की सहायता से वागिन्द्रियको, त्वगिन्द्रिय की सहायता से पाणि को, चक्षुरिन्द्रिय की सहायता से पाद को, रसनेन्द्रिय की सहायता से उपस्थ को तथा घ्राणेन्द्रिय की सहायता से वायु को उत्पन्न करके; ज्ञानेन्द्रियों तथा कर्मेन्द्रियों के सहकारी मन को वह विना किसी सहकारी के ही उत्पन्न करता है; ऐसा तत्त्वों के ज्ञाता कहते हैं।

सूत्र ३१-केचित्तु कानिचिदिन्द्रियाणि भूतकार्याण्याहुः। ३२-तत्तु शास्त्रविरुद्धम्। ३३-भूतानिकेवलमाप्यायकानि।

अनु०-कुछ विचारक तो इन्द्रियों को भूतो का कार्य मानते

---

पाठभेद ३१-केचिदिन्द्रियेषु कानिचिद् भूतकार्याणीति वदन्ति। ३२-तच्छास्त्रविरुद्धम्। ३३-भूतान्याप्यायकानि।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

हैं। क्योंकि यह मान्यता शास्त्रविरुद्ध है। पञ्चमहाभूत इन्द्रियों के पोषक हैं।

छा० तो०-नैयायिका इन्द्रियाणाम्भौतिकत्वं स्वीकुर्वन्ति। तन्नोचितम्, शास्त्रविरुद्धत्वात्। शास्त्रेषु "देवा वैकारिकाः स्मृताः।' इत्यनुसारेणेन्द्रियाणां सात्त्विकाहंकारजन्यत्वमेवस्वीकृतम्। न च मोक्ष धर्मे 'शब्दः श्रोत्रं तथा खादि त्रयमाकाशसम्भवमित्यादिनेन्द्रियाणां-भौतिकत्वं स्वीकर्तव्यमिति वाच्यम्, भूतानामिन्द्रियाणा-माप्यायकत्वात्। आप्यायकत्वञ्च पोषकत्वम्। न च "अन्नमयं सोम्यमनः, आपोमय प्राणस्तेजोमयी वा' (छा०उ० ६।५।४-।-६।६।५) गिति श्रुत्यनुसारेण भूतानि प्रति सात्त्विकाहंकारस्याप्यायकत्वं भूतानाञ्चो-पादानत्वं स्वीकर्तव्यमिति वाच्यम्। 'देवाः वैकारिकास्स्मृताः' इत्यनुसारेण इन्द्रियाणि प्रति सात्त्विकाहंकारस्यैवोपादानत्वसिद्धेः।

आमोद-नैयायिक मानते हैं कि इन्द्रियाँ भौतिक हैं, किन्तु यह मान्यता शास्त्रविरुद्ध होने से अनुचित है। शास्त्रों में 'इन्द्रियां सात्त्विक हैं' (वि० पु० १।२।३९) इत्यादि वाक्य के अनुसार इन्द्रियों को सात्त्विकाहंकारजन्यमाना गया है। यहाँ पर यह नहीं कहा जा सकता है कि-मोक्षधर्म में-"शब्द, श्रोत्र तथा आकाश आदि तीन आकाशजन्य हैं।" इत्यादि वाक्यों से इन्द्रियों की भौतिकता बतलायी गयी है। क्योंकि पञ्चमहाभूत 'इन्द्रियों के आप्यायक हैं। आप्यायक पोषक को कहते हैं। यह भी नहीं कहा जा सकता है कि-हे सोम्य मन पार्थिव है, प्राण जलीय है तथा वाणी तैजस

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

है' इत्यादि श्रौत वाक्य के अनुसार भूतों को इन्द्रियों का उपादान कारण तथा सात्त्विकाहंकार को निमित्त कारण मानना चाहिये–क्योंकि वि० पु० १।२।३९ वाक्य इन्द्रियों को सात्त्विकाहंकारजन्य ही बतलाता है।

मूल ३४–एतेषां संहतिं विना कार्यकरत्वाभावात् मृत्तिकावालुकाजलानि सम्मेल्य एकद्रव्यतामापाद्य तेनभीत्तिनिर्माणवत् एतानीश्वर एकीकृत्य अण्डतामापाद्य तदन्तश्चतुर्मुखं सृजति।

अनु०–इन सभी महदादिपदार्थों के सम्मिश्रण के विना कार्य के नहीं हो सकने से जिस तरह मिट्टी बालू और जल को मिलाकर एकद्रव्य बनाकर दिवार का निर्माण होता है, उसी प्रकार ईश्वर इन सबों को एक में मिलाकर अण्ड बनाकर उसके भीतर चतुर्मुख (ब्रह्मा) की सृष्टि करते हैं।

छा० तो०–प्रकृतेरुद्भूतान्यपि महदादीनि तत्त्वानि कार्यकराणि नहि भवन्ति। यथाभित्तिं निर्मिमीषुः मृद्बालुकाजलान्येकीकृत्य भित्तिं निर्माति तथैवेश्वरोऽपि महदादीनि सम्मेलयतीऽण्डंनिर्माय तदन्तर्ब्रह्माणं सृजति। तथाचोक्तम्–

पाठभेद ३४–एतेषां मेलनं विना कार्यकरत्वाभावात् यथा कश्चिन्मृदं शर्करां जलं च मेलयित्वैकं द्रव्यं कृत्वा भित्तिं करोति, तथा ईश्वर एतत्सर्वं मेलयित्वा तैरेकमण्डं सृजति।

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं बिना ।
नाशक्नुवन् प्रजां स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोग परस्परसमाश्रयाः ।
एकसंघातलक्षाश्च सम्प्राप्यैकमशेषतः ।
महदादि विशेषान्ताह्यण्डमुत्पादयन्ति ते ॥इति॥
--(वि० पु० १।२।५१-५३)

आमोद-प्रकृति से उत्पन्न होकर भी महत् आदि तत्त्व किसी भी कार्य को करने में असमर्थ रहते हैं। जिस तरह भित्ति (दिवाल) के निर्माण का इच्छुक व्यक्ति मिट्टी बालू और जल को मिलाकर दिवाल का निर्माण करता है उसी प्रकार सृष्टिकाल में परमात्मा महदादि तत्त्वों को मिलाकर ब्रह्माण्ड को उत्पन्न करके उसके भीतर चतुर्मुख ब्रह्मा की सृष्टि करता है। कहा भी गया है।

अनेक प्रकार की शक्ति से सम्पन्न पृथक्-पृथक् रहने के कारण महदादि आपस में नहीं मिलने से परस्पर में पूर्णरूप से संश्लिष्ट न होने से प्रजाओं की सृष्टि नहीं कर सके, पुनः परस्पर में पूर्णरूप से संश्लिष्ट वे आपस में संयुक्त होकर पूर्णरूप से एकसमुदाय तथा एक लक्ष्यवाले होकर महत् तत्त्व से लेकर विशेष पञ्चमहाभूत पर्यन्त ब्रह्माण्ड की सृष्टि करते हैं।

**मूल ३५--अण्डमण्डकारणानि च स्वयमुत्पादयति, अण्डान्तर्गतानि वस्तूनि चेतनान्तर्यामी भूत्वा सृजति।**

---

पाठभेद ३५--तत्र चतुर्मुखं सृजति, अण्डकारणानि च स्वयमेव सृजति, अण्डान्तर्गतवस्तुनि चेतनान्तर्यामी सन् सृजति।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अनु०-ईश्वर ब्रह्माण्ड और ब्रह्माण्ड के कारणभूतमहदादि की सृष्टि स्वयं करता है तथा ब्रह्माण्ड के भीतर की वस्तुओं की रचना वह जीवों का अन्तर्यामी बनकर करता है।

छा० तो०-परमात्मनः सृष्टिर्द्विधाभवति सद्वारकसृष्टिरद्वारकसृष्टिश्च। परमात्मनासाक्षात्क्रियमाणासृष्टिरद्वारकसृष्टिः, ब्रह्मणोऽन्तर्यामित्वेन क्रियामाणासृष्टिस्सद्वारकसृष्टिः। ब्रह्माण्डस्य महदादीनाञ्चतुर्मुखस्य च सृष्टिं परमात्मा साक्षात्करोति, ब्रह्माण्डगतानां देवमनुष्यादीनां सृष्टिं परमात्मा 'मत्तस्स्मृतिर्ज्ञानमपोहनञ्च' (भगवद्गीता) इति न्यायेन ब्रह्मान्तर्यामित्वेन करोति। अत एवेयं परमात्मनः सद्वारसृष्टिः। तथा चाह भगवान् मनुः—

'सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः॥
अप एवससर्जादौ तासु वीर्यमवासृजत्॥ (म० स्मृ० १।८)

किञ्च-यत्किञ्चत् सृज्यते येन सत्त्वजातेन वैद्विज। तस्य सृज्यस्य सम्भूतौ तत्सर्वं वैहरेस्तनुः। इति। (वि०पु० १।२२।३८)

**मूल ३६—अण्डानि चानेकानि चतुर्दशलोकयुतान्युत्तरोत्तरं दशगुणैस्सप्तभिरावरणैरावृतानीश्वरस्य क्रीडाकन्दुकस्थानीयानि जलबुदबुदवद्युगपत्सृष्टानि च भवन्ति।**

अनु०-जल में उठने वाले बुलों के समान अथवा परमात्मा

पाठभेद ३६-अण्डानिचानेकानि चतुर्दशलोकयुक्तान्युत्तरोत्तरं दशगुणैरावरणैः सप्तभिरावृतानि ईश्वरस्य क्रीड़ाकन्दुकस्थानीयानि जलबुदबुदवदेक काले सृष्टानि।

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

के क्रीडाकन्दुकके समान चौदह लोकों से युक्त, उत्तरोत्तर दश-गुणित विस्तार वाले सात आवरणों से आवृत अनेक ब्रह्माण्ड समकाल में ही (परमात्मात्मा द्वारा) उत्पन्न कर दिये गये।

छा०तो०—अण्डमेकमनेकं वा परमात्मा सृजतीति जिज्ञासायां समाधत्ते ग्रन्थकारः। परमात्मा स्वसत्यसंकल्पेनैव समकालमेवानेकानि ब्रह्माण्डानि सृजति। इमानि सर्वाण्यण्डानि परमात्मनः क्रीडाकन्दुकानीव जायन्ते। येन प्रकारेण जलेषु बुद्बुदं समकालमेवोद्भवन्ति तथैवेमान्यण्डानि जायन्ते। प्रत्येकेषु ब्रह्माण्डेषु चतुर्दश-संख्याका लोका भवन्ति। तेषु सप्तसंख्याका भूर्भुवस्स्वर्महर्जन-स्तपस्सत्यमिति लोकाउपरि भवन्ति। भुवोघस्ताच्चातलादय स्सप्तलोका भवति। ते च सर्वे प्रत्येकं दशसहस्रयोजनो-च्छ्राया। तथा चाह भगवान् पराशरः—दशसाहस्रमेकैकं पातालं मुनिसत्तम। अतलं वितलं चैव नितलञ्च गभस्तिमत्। महाख्यं सुतलं चाग्र्यं पातालंचापि सप्तमम्। (वि०पु०२।५।२) शुक्लकृष्णारुणाः पीताः शर्कराः शैलकाञ्चनाः। भूमयो यत्र मैत्रेय वरप्रासादमण्डिताः ॥३॥ तेषु दानवदैतेयाः यक्षाश्च शतशस्तथा। निवसन्तिमहान्तागजातयश्च महामुने ॥४॥ एतेषां सप्तलोकानामुपरि नवसहस्रयोजनविशालः, सप्तद्वीपपर्वतसागरविशिष्टः पद्माकारो भूर्लोकः, भूर्लोकस्योपर्यादित्य लोकस्याघस्ताल्लक्षयोजनविशालो भुवर्लोकः तदुपरि चतुर्दशलक्षयोजनोच्छ्रायः स्वर्लोको वर्तते। तदनन्तरं ध्रुवस्योपरि कोटियोजनोच्छ्रायो महार्लोकः तदुपरिकोटिद्वययोजनोच्छ्रायो जनलोकः। तदुपर्यष्टकोटि योजनोच्छ्रायस्तपो-

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

लोकः। तदुपरि अष्टचत्त्वारिंशल्लक्षयोजनोच्छ्रायः सत्यलोको वर्तते। ब्रह्माण्डञ्चपरिवृत्तमण्डकाहेन। तदपि सप्तावरणेन समावृतम्- प्रत्येके च प्राकराः उत्तरोत्तर दशगुणं विस्तृतास्सन्ति। 'अण्डानां तु सहस्राणां सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटि-कोटि शतानि च' (वि०पु० २।७।२७-२८) इति श्रीविष्णुपुराण सूक्त यनुसारेण भगवतःक्रीडासाधनभूतान्यनेकान्याण्डानि समकालमेव बिलसन्ति।

आमोदः- परमात्मा एक ब्रह्माण्ड की सृष्टि करता है अथवा अनेक ? यह जिज्ञासा होने पर ग्रन्थकार कहते हैं-परमात्मा अपने सत्य संकल्प के द्वारा समकाल में ही अनेक ब्रह्मण्डों की सृष्टि कर देता है। जिस तरह जलमें अनेक बुल्ले उठते हैं; उसी प्रकार एकही समय में अनेक ब्रह्माण्ड उत्पन्न होते हैं। ये सभी ब्रह्माण्ड परमात्मा के क्रीडाकन्दुक के समान है : प्रत्येक ब्रह्माण्ड में चौदह लोक होते हैं। उनमें सातलोक ऊपर के है। वे हैं भूर्लोक, भुवर्लोक, स्वर्लोक, महर्लोक, जनलोक, तपोलोक और सत्यलोक। पृथ्वी के नीचे अतलादि सातलोक हैं- ये सभी लोक दस-दस हजार योजन विस्तृत हैं। विष्णुपुराण (२।५।२-४) में भगवान् पराशर ने भी कहा है- हे मुनिसतम प्रत्येक पाताल दस-दस हजार योजन ऊँचा है। अतल,वितल, नितल, महातल, सुतल तथा पाताल ये सातलोक हैं। हे मैत्रेय जहां पर सुन्दर महलों से सुशोभित, शुक्ल, कृष्ण, अरुण और पीत वर्णं की तथा शर्करा-

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मयी (कँकरीली ) शैली ( पत्थरीली) और सुवर्णमयी भूमियां है। हे महामुने ! वहाँ दानव, दैत्य, यक्ष और बड़े-बड़े नाग आदिकों की सैकड़ों जातियां रहती हैं।

इन पातालों के ऊपर नवहजर योजन विस्तृत तथा सात दीपों, पर्वतों तथा पर्वतों से विशिष्ट कमलाकृति भूर्लोक है। भूलोक के ऊपर तथा आदित्य लोक के नीचे एक लाख योजन विस्तृत भुवर्लोक है। उसके ऊपर चौदह लाख योजन ऊपर स्वर्लोक है। उसके पश्चात् ध्रुबलोक से ऊपर करोड़ योजन ऊँचा महर्लोक है। उसके ऊपर दो करोड़ योजन ऊँचा जनलोक है। उसके ऊपर आठ करोड़ ऊँचा तपोलोक है। उसके ऊपर अड़तालिस करोड़ योजन ऊँचा सत्यलोक है। ब्रह्माण्ड अण्डकटाह से परिवृत्त है। यह अण्डकटाह भी सात आवरणों से आवृत है। ये प्रत्येक आवरण उत्तरोत्तर दसगुने विस्तृत है। 'हेमैत्रेय ! प्रकृति में हजारों, लाखों तथा सैकड़ों' करोड़ ब्रह्माण्ड हैं।' ( वि०पु० २।६-२७-२८ ) के अनुसार प्रकृति में असंख्य ब्रह्माण्ड हैं, जो परमात्मा की क्रीडा के साधन भूत हैं।

सू०३७-भूतेषु मध्ये आकाशोऽवकाश हेतुः, तेजः पचनादि हेतुः, जलं सेचनपिण्डीकरणादिहेतुः पृथिवीधारणादिहेतुरित्याहुः ।

अनु०-पञ्चमहाभूतों में आकाश अवकाश का कारण है; वायु वहने का, तेज पकाने आदि का जल सींचने पिण्डी बनाने आदि का और पृथिवी धारण आदि का कारण है; यह तत्त्ववेत्ताओं का कहना है।

पाठभेद-३७ भूतेष्वाकाशो ऽवकाश हेतुः, वायुर्वहनादिहेतुः तेजः पचनादि हेतुः, जलं सेचन पिन्डीकरणा दिहेतुः, पृथिवी धारणादि हेतुरिति वदन्ति।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

छा० तो०-अस्मिन् वाक्ये भूतानां विनियोगमभिधत्ते-आकाशो सर्वपदार्थानाम् स्थित्यर्थं गमनार्थञ्चावकाशं प्रददाति । यद्यपि 'अस्यदेहस्यवियत्वो लाघवं सौक्ष्म्यमेवच । शब्दः श्रोत्रं बलं बह्मन् सुषीरत्वं विविक्तता । इत्यनुसारेण सन्त्येनेके विनियोगाः परञ्चाव-काशप्रदानस्य प्रधानत्वात्तन्मात्रोक्तिः । अवकाशप्रदत्त्वं हि नाम बाह्याभ्यन्तर व्यवहारहेतुत्वम् । यद्यपि वायोः-"चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः । सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभि-लक्षणम् । (श्रीमद्भागवत ३।२६।३७) इन्यनुसारेण अनेके विनि-योगाः सन्ति तथापि वहनम् = प्राप्तिः; प्रधानो विनियोगः" अदिना तद्व्यतिरिक्ताः सर्वेभिधीयन्ते । तेजसश्च-"द्योतनं पचन पानमदनं हिममर्दनम् । तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥' (श्रीमद्-भागवत ३।२६।४०) इत्येषु विनियोगेषु पचनमेव प्रधानम् । जलस्य च-'क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम् । तापापनोदो भूयस्त्वमम्भसो वृतयस्त्विमाः ॥" (श्रीमद्भागवत ३।२६।४३) इत्युक्तेषु विनियोगेषु सेचनादिकम् प्रधानम् । पृथिव्या-श्च-'भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ॥ सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥' (श्रीमद्भागवत ३।२६।४६) इत्यादिकासु वृत्तिषु धारणम् प्रधानम् ।

आमोद-इस वाक्य में ग्रन्थकार पञ्च महाभूतों के विनियोग को बतला रहे हैं । आकाश सभी भूतों की स्थिति एवं जाति के लिए अवकाश प्रदान करता है । शरीर में लघुता, सूक्ष्मता

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

आकाश से ही आती है। ब्रह्मन्! शब्द, श्रोत्रेन्द्रिय, बल, सुषीरता तथा विविक्तता ये सभी आकाश की ही वृत्ति हैं; किन्तु इन सबों में अवकाश ( भीतर बाहर आदि व्यवहारों का कारण ) प्रदान ही उसका सर्वं प्रधान विनियोग है। यद्यपि वायु का चालनं व्यूहनम् इत्यादि- अर्थात् वायु के कर्मों के मुख्य लक्षण कँपाना संयुक्तों को विभक्त करना, वियुक्तों को संयुक्त करना, गन्धाश्रय द्रव्य तथा वायु को तत् तत् इन्द्रियों के पास पहुंचाना मुख्य प्रणरूप से सभी इन्द्रियों का आधार होना है, फिरभी इन सबों में गन्धाश्रय द्रव्य तथा वायु को तत् तत् इन्द्रियों के पास पहुंचाने को ही वायु का कर्म इसलिए कहा गया है कि वह स्वव्यतिरिक्त सभी वायु के कर्मों का उपलक्षण है। प्रकाशित करना, पकाना, भूख एवं प्यास को उत्पन्न करके खाने पीने का कर्म कराना ठंडी को नष्ट करना, तथा सुखाना ये सभी तेज के कार्य हैं। ग्रन्थोक्त पचन इन सबों का उपलक्षण है। जलका कार्य है- भिगोना, पिण्डन, पीने पर शान्ति प्रदान करना। जीवन प्रदान करना, पोषण, मुलायम करना तथा भूयस्त्व। ग्रन्थोक्त जलका कार्य सेचन तथा पिण्डीकरण इन सबों का उपलक्षण है। उत्पादन सभी जीवों का आधार होना; सभी कामों की विशेषणता; विभिन्न देशों के प्राणियों के आकार विशेष का हेतु होना; ये सभी पृथिवी के कार्य हैं। और ग्रन्थोक्त पृथिवी का धारण गुण इन सबोंका उपलक्षण है।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

सू० ३८-श्रोत्रादीनाम्पञ्चानां ज्ञानेन्द्रियाणां क्रमेण शब्दादिपञ्चक ग्रहणंकृत्यम्, वागादीनाम्पञ्चानां कर्मेन्द्रियाणां विसर्गशिल्पगत्युक्तयः कृत्यानि; मनस्तुसर्वेषामेषां साधारणम् ।

अनु०-श्रोत्र आदि ( त्वक्, चक्षु, जिह्वा और घ्राण ) पांच ज्ञानेन्द्रियों के कर्म क्रमशः शब्द आदि ( स्पर्श, रूप, रस और गन्ध इन ) पांच विषयों का ग्रहण है । वाक् आदि ( पाणि, पाद पायु तथा उपस्थ ) पांच कर्मेन्द्रियों के कर्म; क्रमशः वाणी, शिल्प, गति विसर्ग तथा आनन्द विशेष जनकत्व हैं । मन इन दोनों प्रकार के इन्द्रियों के कर्मों का सहकारी है ।

छा०तो०-अस्मिन् वाक्ये इन्द्रियाणां वृत्तिमभिधत्ते-श्रोत्र त्वक चक्षुर्जिह्वाघ्राणाख्यानि पञ्चज्ञानेन्द्रियाणि क्रमशः शब्दस्पर्शरूपरस-गन्धाख्यान् विषया गृह्णन्ति वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रि-याणि पञ्च वचनादानविहरणविसर्गानन्दांश्च जनयन्ति; आभ्यन्तरे-न्द्रियं मनः ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च वृत्तिनां सहकारि भवति । मनसः साहाय्यं विना नहि किञ्चिदिन्द्रियं स्वकार्यंकर्तुं प्रभवति । तथा चाह भगवान् पराशरः-

त्वक्चक्षुर्नासिका जिह्वा श्रोत्रमथतु पञ्चमम् । (वि०पु०१।२।४७ )
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विज ॥

पाठभेद-३८ श्रोत्रादि ज्ञानेन्द्रियाणां पञ्चानां शब्दादिविषयपञ्चकग्रहणं कृत्यम् वागादि कर्मेन्द्रियाणां पञ्चानां विसर्गशिल्पगत्युक्तयः कृत्यम् मन एतेषां सर्वेषां समानम् ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

पायूपस्थौ करौ पादौ वाक् च मैत्रेय पञ्चमी ॥४८॥
विसर्गशिल्पगत्युक्ति कर्म तेषाञ्च कथ्यते ॥४९॥

आमोदः-ग्रन्थकार इस वाक्य में इन्द्रियों की वृत्ति का वर्णन करते हैं- श्रोत्र, त्वक्, चक्षु, जिह्वा और घ्राण ये पांचो ज्ञानेन्द्रियाँ क्रमशः शब्द, स्पर्श, रूप, रस और गन्ध का ग्रहण करती हैं तथा वाक् पाणि, पाद, पायु और उपस्थ पांचो कर्मेन्द्रियां क्रमशः वचन, आदान विहरण, विसर्ग (त्याग) तथा आनन्द विशेष के जनक हैं। मन इन दोनों प्रकार के इन्द्रियों के स्वकार्योत्पादन में सहकारी होता है। मनकी सहायता के विना इन्द्रियाँ अपने कार्यों को उत्पन्न करने में समर्थ नहीं हो सकती है। भगवान् पराशर भी कहते हैं- हे द्विज! त्वक् चक्षु, नासिका जिह्वा और श्रोत्र ये पांचो बुद्धिकी सहायता से शब्दादि पञ्चविषयों को ग्रहण करने वाली पञ्चज्ञानेन्द्रियां हैं। हे मैत्रेय! पायु (गुदा) उपस्थ (लिङ्ग), हस्त, पाद और वाक् ये पांच कर्मेन्द्रियां हैं। इनके कर्म- मल-मूत्र का त्याग, शिल्प, गति और वचन बतलाये जाते हैं।

**मू०३९-आकाशादीनाम्भूतानां क्रमेण शब्दादयोगुणा भवन्ति।**

अनु०-आकाशआदि पञ्चमहाभूतों के क्रमशः शब्दादि पाँच गुण होते हैं।

---

पाठभेद-३९ आकाशादि भूतानां शब्दादयो गुणाः।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

छा० तो०–आकाशवायुतेजोजलपृथिवीनां क्रमशः शब्दस्पर्शरूपरसगन्धा विशेषगुण इत्यर्थः ।

आमो–आकाश, वायु, तेज, जल एवं पृथिवी के क्रमशः शब्द, स्पर्श, रूप, रस एवं गन्ध विशेष गुण होते हैं ।

**सूल ४०–गुणविनिमयः पञ्चीकरणेन । ४१–आकाशस्य कृष्णतयाभानमपि तत्प्रयुक्तम् ।**

अनु०–पञ्चीकरण के कारण ही एकभूत का गुण दूसरे भूत में पाया जाता है । आकाश में कृष्ण रूप की प्रतीतिभी पञ्चीकरण के ही कारण होती है ।

छा० तो०–यदि आकाशादिभूतेषु एकैक एव गुणाभवन्वि तर्हि पृथिव्यादिषु भूतान्तराणां शब्दादयो गुणाः कथमुपलभ्यन्त इति चेदाह–गुणविनिमय इत्यादिना । अयमाशयः भूतान्तरेषु भूतान्तरगुणानां संक्रमणञ्च पञ्चीकरणप्रक्रियया भवति । पञ्चीकरणप्रक्रियानाम–भूतानि द्वेधा–द्वेधा विभज्य, प्रत्येकेषां भागमेकं चतुर्धात्रिभज्य भूतान्तरेषु संयोजनम् एवं पञ्चभूतेषु प्रत्येकेषुस्वीयोभाग अर्द्धः भूतान्वराणां प्रत्येकेषां भागः अष्टमांशो भवति । पञ्चीकरण प्रक्रियया; पृथिवी = $\frac{1}{2}$ पृथिवी –।– $\frac{1}{8}$ जलम् –।– $\frac{1}{8}$ तेजः –।– $\frac{1}{8}$ वायुः $\frac{1}{8}$ –।– आकाशः । एवमेवभूतान्तरेष्वपि ज्ञेयम् । तथा चोक्तम् पुराणे–

पाठभेद ४०–गुणविनिमयः पञ्चीकरणेन । ४२–आकाशे नैल्यप्रतीतिरपि तेनैव ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

एवं जातेषु भूतानि प्रत्येकन्तु द्विधा ततः ।
चतुर्द्धाभिन्नमेकैकमर्द्धमर्द्धन्तथा स्थितम् ॥
व्योम्नोर्द्धभागश्चत्वारो वायुतेजः पथाभुवाम् ।
अर्द्धानि यानि वायोस्तु व्योमतेजः पयोभुवाम् ॥

पञ्चीकरणादेव आकाशेऽपि जायमाना कृष्णरूपप्रतीतिरपि वास्तविकी । 'यदग्नेरोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपाम् यत्कृष्णं तदन्नस्य' (छा० उ० ६।४।१) इति श्रुतिरेव पृथिव्याः रूपं कृष्णमितिवक्ति। आहुश्चात्र श्रीभाष्यकारा अपि—"यदग्ने रोहितं रूपं तेजसस्तदपामपि रूपं शुक्लं पृथिव्याश्चेत्यग्नेरेव त्रिरूपता । श्रुत्यैव दर्शिता तस्मात् सर्वे सर्वत्रसंगताः ।" (श्रीभाष्य जिज्ञासाधिकरण) न च पञ्चीकरणप्रक्रिया तु श्रुतिषु नोपलभ्यत इति वाच्यम्; यथा भूतत्रयस्योत्पत्तिवर्णनं भूतपञ्चकस्य, भूतसप्तकस्यचोपलक्षणं स्वीक्रियते तथैव त्रिवृत्करणमपि पञ्चीकरणस्य वा सप्तीकरणस्यवोपलक्षणमिति समञ्जसम् सर्वम् ।

आमो०–यदि आकाशादि प्रत्येक भूतों के शब्द आदि एक-एक ही गुण हैं तो फिर पृथिवी आदि भूतों में शब्दादि भूतान्तरो के गुणों की उपलब्धि कैसे होती है ? तो उसका उत्तर देते हुए ग्रन्थकार कहते हैं–गुणविनिमयः इत्यादि–अर्थात् एकभूत में दूसरे भूतों के गुणों का संयोग पञ्चीकरण प्रक्रिया के अनुसार होता है । प्रत्येक भूतों को दो-दो भाग को करके, प्रत्येक भूत के एक-एक

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

भाग को चार-चार भागों में विभक्त करके स्वेतर चारो भूतों में चारो भागों को मिलाने को पञ्चीकरण कहते हैं। पञ्चीकरण के अनुसार-पृथिवी = १/२ पृथिवी + १/८ जल, + १/८ तेज + १/८ वायु तथा + १/८ आकाश है। इसी तरह दूसरे भूतों के भी पञ्चीकरण के विषय में जानना चाहिये। पञ्चीकरण प्रक्रिया के विषय में पुराणों में भी कहा गया है-इस तरह भूतों के उत्पन्न होने पर प्रत्येक को दो-दो भागों में; तदन्तर प्रत्येक के आधे आधे भाग को वैसे ही छोड़कर प्रत्येक के दूसरे आधे भाग को चार भागों में विभक्त करके भूतान्तरों में मिलाया गया। इस तरह आकाश में आधा भाग आकाश का तथा आधे में-पृथिवी, जल, तेज एवं वायु के भाग हैं। इसी तरह वायु में वायु का आधा भाग अपना तथा आधे में पृथिवी, जल, तेज एवं आकाश के भाग सम्मिलित हैं।

इसीं पञ्चीकरण के कारण आकाश में वास्तविक पृथिवी का काला (नीला) रूप प्रतीत होता है। अतएव आकाश के नीरूपत्व को स्वीकार करने वालों का मत वेदविरुद्ध होने के कारण अनादरणीय है। नीलरूप पृथिवी का है; इस अर्थ का प्रतिपादन अग्नि में जो लालरूप दिखायी देता है वह तेज का, जो उजला दिखता है वह जल का तथा जो कालारूप दिखता है वह पृथिवी का है। ( छा० उ० ६।४।१ ) श्रीभाष्यकार भी पञ्चीकरण प्रक्रिया का समर्थन करते हुए कहतें हैं-जो अग्नि

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

में लाल रूप दिखायी देता है वह तेज का, उसका उजला रूप जलीय है तथा काला रूप पार्थिव है। इस तरह श्रुति ही अग्नि के त्रिरूपता का प्रतिपादन करती है। इस तरह सभी भूतोंमें सभी भूत तथा भूतों के गुण सङ्क्रान्त हैं, यह सिद्ध होता है; यहां पर यह नहीं कहा जा सकता है कि श्रुति में तो पञ्चीकरण प्रक्रिया का वर्णन है ही नहीं ? क्योंकि जिस तरह श्रौत भूतत्रय की उत्पत्ति का वर्णन भूतपञ्चक एवं भूत सप्तक का उपलक्षण स्वीकार किया जाता है; उसी तरह श्रौत त्रिवृत्करण भी पञ्चीकरण एवं सप्तीकरण का उपलक्षण है।

**सू०४२-पूर्व-पूर्वतन्मात्र सहायेनोत्तरोत्तरतन्मात्राणि स्वविशेषानुत्पादयन्तीति गुणाधिक्यमभवदित्यपि वदन्ति ।**

अनु०—पूर्व-पूर्व तन्मात्राओं की सहायता से उत्तरोत्तरतन्मात्राएं अपने कार्य आकाशादि को उत्पन्न करते है; अतएव उत्तरोत्तर भूतों में अधिक गुण उत्पन्न होते हैं।

छा०तो०—अस्मिन् वाक्ये उत्तरोत्तरभूतेषु गुणानां वृद्धेः कारणमभिवत्ते—शब्दतन्मात्रमाकाशं शब्दगुणकं जनयति; शब्दतन्मात्रेणावृतं स्पर्शतन्मात्रं शब्दस्पर्शविशिष्टं वायुं जनयति। शब्दस्पर्शतन्मात्राभ्यामावृतं ताभ्यां युक्तं रूपतन्मात्रं शब्दस्पर्शरूपविशिष्टं तेजः जनयति। पूर्वोक्तैः तन्मात्रत्रयैरावृतं तैः संयुक्तं

---

पाठभेद-४२ पूर्वपूर्वतन्मात्रसहितैरेवोत्तरोत्तरतन्मात्रैः स्व-स्वगुणोत्पादनाद् गुणाधिक्यं जायते इत्यपि, वदन्ति ।

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

रसतन्मात्रं च जलं जनयति । तैश्चतुर्भिरावृतेन तैसंयुक्तेनगन्धतन्मात्रेणगुणपञ्चकविशिष्टां पृथिवीं जनयति । अतएव हि तेषु तेषु भूतेषुगुणवृद्धिर्भवतीति । अपिना मतान्तरतां सूचयति ।

आमो०–इस वाक्य में ग्रन्थकार उत्तरोत्तर भूतों में गुणाधिक्य के कारण के विषय में मतान्तर का उल्लेख करते हैं । वह इस प्रकार है, शब्दतन्मात्रा से शब्दगुणक आकाश उत्पन्न होता है । शब्दतन्मात्रा से आवृत तथा उससे संयुक्त स्पर्शतन्मात्रा से शब्द एव स्पर्शगुणक वायु उत्पन्न होता है । शब्दतन्मात्रा एवं स्पर्शतन्मात्रा से आवृत तथा उनसे सयुक्त रूपतन्मात्रा शब्द, स्पर्श एवं रूपगुण विशिष्ट तेज को उत्पन्न करता है । पूर्वोक्त तीन तन्मात्राओं से आवृत तथा उससे संश्लिष्ट रसतन्मात्रा से शब्द, स्पर्श रूप एवं रस गुण विशिष्ट जल उत्पन्न होता है तथा पूर्वोक्त चारो तन्मात्राओं से आवृत तथा उनसे विशिष्ट गन्ध तन्मात्रा से रूप, रस, गन्ध, स्पर्श एवं शब्द गुण विशिष्ट पृथिवी उत्पन्न होती है । इस तरह के मत वाले तत्त्वविदों का यह भी कथन है कि जिस तरह एक गुण वाले आकाश में गुणान्तरों का विनिमय पञ्चीकरण प्रक्रिया से होता है, उसी तरह भूतान्तरों में पञ्चीकरण स्वीकार करना चाहिये ।

सू०४३-सत्त्वशून्यं नाम कालः । ४४-इदञ्च प्रकृतिप्राकृतपरिणामहेतुभूतं कलाकाष्ठादिरूपेणपरिणामार्हं नित्यमीश्वरस्य क्रीडापरिकरभूतं शरीरभूतञ्च ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अनु०-सत्त्व (गुण) शून्यकाल है। यह प्रकृति तथा प्राकृत पदार्थों के परिणाम का कारण, कला काष्ठा आदिरूप से परिणाम के योग्य, नित्य ईश्वर की क्रीडा का साधन तथा उसका शरीर है।

छा०ती०-इदानीमचितस्तृतीयंविभागम् विवेचयति सत्त्वशून्यमिति। सत्त्वशून्य शब्देन कालः प्रोच्यते। सत्त्वशून्मित्यत्र सत्त्वपदम् रजसतमसोरप्युपलक्षणम्। इत्थं गुणत्रयरहितत्वे सति ज्ञानशून्यत्वेसति विकारास्पदत्वं कालस्य लक्षणम्। अयम् प्रकृतेः प्राकृतानाम् महदादीनाम् च परिणामस्य हेतुः। अयमाशयः-ईश्वरो यद्यपि स्वसत्यसंकल्पेनैव प्रकृतिं महदादिकञ्च परिणमयति तथापि सोऽपि सृष्टिकालं संहारकालमित्यादि रूपेण कालमपेक्ष्यत्येव परिणामाय। आह च भगवान्- 'प्रकृतिपुरुषञ्चैव प्रविश्यात्मेच्छया हरिः क्षोभयामास सम्प्राप्ते सर्गकालो व्ययाव्ययौ। (म० स्मृ० १।१६) अभियुक्तारप्याहुः- 'कालेशंसति योग्यतां- चिदचितोरन्योन्यमालिङ्गतोः। भूताहंकृतिवुद्धिपञ्चकरणोस्शन्तप्रवृतीन्द्रियैः। अण्डानावरणैस्सहस्रनकरोत्' (श्रीगुणरत्ने कोश १९) अयं स्वपमपि परिणमते कलाकाष्ठादिरूपेण। कालस्य परिणाम प्रकारमप्याहुः मध्यवीथी मट्टार्याः- "पञ्चदशनिमेषाः काष्ठा, त्रिंसत्कलामुहूर्तम्,

पाठभेद-४३ सत्वशून्यङ्कालः ४४-अयञ्च प्रकृति प्रकृतानां परिणामहेतुः कलाकाष्ठादिरूपेण परिणतो नित्य ईश्वरस्य क्रीड़ापरिकरः शरीरञ्च।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

मुहूर्तानि त्रिंशद्दिवसः, त्रिंशद्दिवसाः पक्षद्वयरूपोमासः, द्वौ मासावृतुः, त्रयोहि ऋतवोऽयनम्, द्वे अयने संवत्सरः, एवं मानुषसंवत्सराः षष्ठ्यधिकत्रिशतसंख्याका एको देवसंवत्सरः द्वादशसहस्राणि देवसंवत्सराश्चतुर्युगम्, तत्रकृतयुगंचत्वारि सहस्राणि त्रेतायुगं त्रीणि सहस्राणि, द्वापरयुगं द्वे सहस्रे, कलियुगमेक सहस्रम्, कृतयुगस्य पूर्वसन्ध्या चत्वारि शतानि अपरसन्ध्याचत्वारि शतानि त्रेतायुगस्य पूर्वसन्ध्या त्रीणिशतानि, अपरसन्ध्यात्रीणि शतानि, द्वापरस्य पूर्वसन्ध्या द्वे शते, अपरसन्ध्या द्वे शते, कलियुगस्य पूर्वसन्ध्या शतम् अपरसन्ध्या शतम्; एवं किञ्चिदधिकान्येकसप्तति चतुर्युगानि मन्वन्तरम्, एवं चतुर्दशमन्वन्तराणि चतुर्युग सहस्रम् ब्रह्मणो दिनम् । रात्रिरप्येतत् समानैव । एवमप्यहोरात्रमाससंवत्सर क्रमेण शतान्तपरिगणितसंवत्सरा ब्रह्मण आयुस्त स्यायुषः परमितिनाम'– (वार्तमाला)

एवं परिणामास्पदोऽपिकालो नित्यः । तस्य नित्यत्वञ्च– 'अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते ।' (वि०पु०१।२।१६) इति सूक्त्या समर्थयामास भगवान् पराशरः । 'प्रकृतिपुरुषकाल व्यक्त मुक्तायदिच्छामनुविदधति' ( आ०सि०१ ) इति भगवद्यामुनोक्तिः, 'अखिलभुवनजन्मस्थेमभंगादिलीले' (श्रीभाष्य मंगलाचरण) इति श्रीभाष्यकार सूक्तिश्च कालस्य परमात्मक्रीडापरिकरत्वं साधयति । उपर्युक्तः कालकृतपरिणामो लीलाविभूतावेव भवति नतु नित्यविभूताविति– 'नकालस्तत्रवै प्रभु'रित्यादिना भगवान् पराशरः

CC0. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

आह । सोऽयंकालोचिदन्तर्गतत्वात् अशेषचिदचिद्वस्तुशेषिणो' इति ( वेदार्थसंग्रह १ ) इति सूक्त्यनुसारेण 'यस्यकालः शरीरम्' (  ) इति श्रुत्यनुसारेण च परमात्मनः शरीरमिति सिद्धयति ।

आमोद०--अब अचित् तत्त्व के तीसरे विभाग द्व सत्वशून्य की विवेचना करते हैं । सत्त्वशून्यशब्द काल का वाचक है । सत्त्व शून्य शब्द का सत्त्व शब्द रजोगुण और तमोगुण का उपलक्षण है । इस तरह काल का लक्षण–गुणत्रय रहित, ज्ञानशून्य होते हुए विकारास्पद होना'– हुआ । काल–प्रकृति तथा प्राकृत महदादि के परिणाम का कारण है । अभिप्राय यह है कि-यद्यपि ईश्वर अपने सत्यसंकल्प के द्वारा प्रकृति तथा प्राकृत तत्त्वों को परिणत करता है; फिर भी वह परिणाम के लिए सृष्टिकाल अथवा संहार काल आदि के आगमन की प्रतीक्षा करता ही है । भगवान् मनु भी कहते हैं- सृष्टि काल के आने पर भगवान् अपनी इच्छा से प्रकृति तथा पुरुष के भीतर अन्तर्यामी रूपसे प्रवेश करके उनको प्रेरित किये । यह काल स्वयं कलाकाष्ठा इत्यादि रूप से परिणत होता है । काल के परिणाम प्रकार की चर्चा करते हुए मध्य-वीथी भट्टार्य वार्तामाला में कहते हैं–पन्द्रहनिमेष = १काष्ठा, तीस काष्ठा = १ कला, ३० कला = १ महूर्त, ३०मुहूर्त = १ दिन, ३० दिन = २पक्ष या १ मास, २मास = १ऋतु, ३ ऋतु = १ अयन, २ अयन = वर्ष, इस तरह ३६० मानव वर्ष = १ देव वर्ष, १२००० देव वर्ष = चार युग; उसमें भी, चार हजार देव वर्ष = सत्ययुग, ३००० वर्ष का त्रेतायुग, २००० वर्ष का द्वापरयुग, १००० वर्ष

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

का कलियुग । चारसौ ४०० वर्ष को सत्ययुग की पूर्व सन्ध्या, ४०० वर्ष की सत्ययुग की अपर सन्ध्या होती है । ३०० वर्ष को त्रेता की पूर्व संध्या और ३०० वर्ष की त्रेता की अपर सन्ध्या; २०० वर्ष की द्वापर की पूर्व सन्ध्या और २०० वर्ष को द्वापर की अपर सन्ध्य; १०० वर्ष को कलियुग की पूर्व सन्ध्या और १०० वर्ष की कलियुग की अपर सन्ध्या होती है । इस तरह ७१ चतुर्युग से कुछ अधिक का एक मन्वंतर होता है । १४ मन्वन्तर का एक ब्रह्मा का दिन होता है और उनकी उतनी ही बड़ी रात्रि होती है । इसी तरह पक्ष मास ऋतु अयन एवं संवत्सर के क्रम से ब्रह्मा की १०० वर्ष की आयु होती है । ब्रह्मा की आयु को परम कहा जाता है ।

इस तरह से परिणामास्पद होकर भी काल नित्य है,–'हे द्विज यह ऐश्वर्य सम्पन्न काल अनादि एवं अनन्त है । ( वि० पु०१।२।२६) यह भगवान् पराशर की सूक्ति भी काल को नित्य बतलाती है । 'प्रकृति, पुरुष काल, बद्धजीव, मुक्तजीव आदि जिसकी इच्छा का नित्यही पालन करते हैं । ( आ०सि०१ ) यह भगवान् यामुनाचार्य की सूक्ति तथा–'सम्पूर्ण जगत् की उत्पत्ति, स्थिति, संहार आदि जिस परमात्मा की लीला हैं, इत्यादि श्रीभाष्य की सूक्ति के द्वारा सिद्ध होता है कि सभी कार्योंमें विशेषण रूप से प्रतीत होने वाला काल परमात्मा की क्रीड़ा का परिकर है । काल का परिणाम लीला विभूति में ही होता है नित्य विभूति में नहीं । 'नित्य विभूति में काल नियामक नहीं है'

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

श्रीपराशर महर्षिका वाक्य भी यही वतलाता है। अचित् पदार्थ के अन्तर्गत होने के कारण; 'सम्पूण जड़ चेतन पदार्थोंके यथेष्ट विनियोक्ता श्रीभगवान् को ( वेदा०सं०१ ) इस सूक्ति; तथा 'जिस परमात्मा का काल शरीर है' इस श्रुतिके अनुसार काल परमात्मा का शरीर सिद्ध होता है।

**सू०४५—एतदन्यदुभयविधमप्यचित् ईश्वरस्यात्मनश्च भोग्य भोगोपकरणभोगस्थानभूतम् ।**

अनु०—इस सत्त्वशून्य से भिन्न दोनों प्रकार का (शुद्ध सत्त्व एवं मिश्र सत्त्व ) अचित् ईश्वर एवं जीव के भोग्य, भोग के साधन तथा भोग स्थान रूप होते हैं।

छा०तो०—चेतना अचेतनस्य भोक्तारो भवन्ति । चेतनाश्च जीवः ईश्वरश्च । अतएवोभयोः शुद्धसत्त्वं मिश्रसत्त्वञ्च भोग्यादीनि भवन्तीत्यर्थः । शुद्धसत्त्वस्य विनियोगे ईश्वर एवं प्रधानः । तदिच्छयैव मुक्तानां नत्यानामपि भोगो भवति शुद्धसत्त्वस्य । मिश्रसत्त्वस्य भोक्तारो प्रधानतया बद्धा एव जीवा भवन्ति । सामान्यतः जीवा ईश्वरश्च उभयोरेव विभूतयोः भोक्तारो भवन्ति । शुद्धसत्त्वमिश्रसत्त्वयोश्च तद्रूपेण परिणामः परमात्मनस्सत्यसंकल्पानुसारेणैव भवति।

आमोद०—चेतन अचेतनों के भोक्ता होते हैं। चेतन दो प्रकारके हैं।

---

पाठभेद—४५ अन्यौ द्वावचित्पदार्थावीश्वरस्यात्मनश्च भोग्य भोगोपकरण भोगस्थानानि भवन्ति ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

जीव और ईश्वर अतएव इन दोनों प्रकार के चेतनों के शुद्ध-सत्व और मिश्रसत्व भोग्य, आदि ( भोगोपकरण भोगस्थान ) आदि के रूप में परिणत होते हैं। शुद्धसत्त्व के विनियोग में ईश्वर ही प्रधान होता है। ईश्वर की सत्यसंकल्प रूप इच्छा के ही कारण शुद्धसत्व का भोग मुक्त एवं नित्य जीव भी किया करते हैं। इस तरह मिश्रसत्व के भोक्ता प्रधान रूप से बद्धजीव ही होते हैं। ईश्वर तथा नित्य एवं मुक्तजीव तो लीलाविभूति रूप मिश्रसत्त्व में लीलारसका ही अनुभव करते है। सामान्यतः तो ईश्वर एवं जीव दोनों विभूतियों का भोग करते हैं। ईश्वर के सत्यसंकल्प रूप इच्छा के ही द्वारा दोनों प्रकार के अचितों का दोनों प्रकार के चेतनों के भोग्य भोगोपकरण और भोगस्थान के रूप में परिणाम होता है।

**सू०४६-भोग्यानि-विषयाः; भोगोपकरणानि चक्षुरादिकरणानि, भोगस्थानानि-चतुर्दशभुवनानि सर्वे च देहाः**

अनु०-(लीलाविभूति में ) भोग्य ( शब्दादि ) विषय हैं। भोगोपकरण चक्षु आदि इन्द्रियां हैं तथा भोग्य के स्थान-चौदह भुवन तथा सभी शरीर हैं।

छा०तो०-यद्यप्यत्र भोग्यादीनामुभयविभूते दृष्ट्या निर्देशः कर्तव्यमासीत् तथापि लीलाविभूतेरेव दृष्ट्या वक्ति-भोग्यानीति-नन्व इमान्येव भोग्यादीन्युभयविभूत्योः कथं नहि स्वीक्रियन्त इति

पाठभेद-४६ भोग्या विषयाः, भोगोपकरणानि चक्षुरादि करणानि, भोग-स्थानानि चतुर्दशभुवनानि समस्त देहाश्च।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

चेन्न । उभयविभूत्योर्भोगयोर्भिन्नत्वात् । अत्रजीवानां भोगः सुखादिकम् । तादृशज्ञानविषयत्वाच्छब्दादयो विषयाः भोग्याः । तेषांम्प्राप्तेस्साधकतमानि चक्षुरादीनीन्द्रियाणि । यत्राधिकरणे तिष्ठतश्चेतनस्य तादृशं ज्ञानमुत्पद्यते तद्भोगस्थानम् । देहाश्चदेवमानुषतिर्यक स्थावरभेदभिन्नाः ।

आमो०-यद्यपि प्रसंगानुसार दोनों विभूतियों के भोग्य आदि का निर्देश करना चाहिये था फिर भी ग्रन्थकार मूल में लीला विभूति के ही भोग्य आदि का निर्देश करते हैं। इन्हीं भोग्य आदि को नित्य विभूति का भी इसलिए नहीं माना जा सकता है कि दोनों विभूतियों के भोग्यादि भिन्न-भिन्न हैं। लीला विभूति में जीव सुख दुख आदि भोगों को भोगता है। उस तरह के ज्ञान का विषय होने के कारण शब्द आदि भोग्य हैं। उन भोग्य पदार्थों की प्राप्ति के साधकतम-चक्षुरादि इन्द्रियां ही भोगोपकरण हैं। जहां पर रह कर जीव इन सुखादिकों को भोगता है; वे भोग स्थान हैं। देव, मनुष्य, तिर्यक् एवं स्थावर ये चार भेद देहों के हैं।

मूल ४७-एतेषु प्राथमिकमचित्तत्त्वमधस्तनेनावधिना युक्तं, परितस्तनेनोपरितनेनचावधिना विरहितम्, मध्यममचित्तत्त्वं परितस्तनेनाधस्तनेनावधिना रहितमूर्ध्वावधिना युक्तं च।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

कालस्सर्वत्रैकरूपो वर्तते ।

अनु०-इन सबों में पहला अचित् तत्त्व (शुद्धसत्त्व) नीचे की ओर सीमित तथा चारों तरफ एवं ऊपर की ओर असीमित है । मध्यम अचित् तत्त्व नीचे तथा चारों ओर असीमित है किन्तु ऊपर की ओर सीमित है । काल हर ओर एक समान असीमित है ।

छा० तो०-नित्यविभूतिः अधस्तात् लीलाविभूत्या परिच्छिन्ना लीलाविभूतिश्चोपरिष्टात् नित्यविभूत्या परिच्छिन्ना । कालस्तु सर्वत्र समानरूपेण व्यापकः ।

आमोद-लीला विभूति ऊपर की ओर नित्यविभूति से सीमित है नित्यविभूति नीचे की ओर लीला विभूति से सीमित है । काल तो सब ओर से समान रूप से असीमित है ।

मूल ४८-कालः परम्पदे नित्यः, अत्रानित्यः इत्यप्याहुः ।

अनु०-कुछ लोग कहते हैं कि काल परम्पद में नित्य तथा लीलाविभूति में अनित्य है ।

---

पाठभेद ४७-अत्र पूर्वाचितोऽधः सीमास्ति उर्ध्वं परितश्च तन्नास्ति, मध्यमाचितः परितोऽधश्च सीमा नास्ति उपर्यस्ति, कालः सर्वत्राविशेषेण तिष्ठति ।

पाठभेद ४८-कालश्च परमपदे नित्यः, अत्रानित्य इति वदन्ति ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

छा० तो०—शास्त्रम्—परमपदे कालस्योत्पत्त्यादिकं नहि प्रतिपादयति । लीलाविभूतौ व्यूहकृत्यप्रतिपादनावसरे कालसृष्टिरनिरुद्धकृत्यमित्यभिहितम् । यथा प्रकृतिर्महदादि रूपेण परिणमति तथैव कालोऽपि कलाकाष्ठा निमेषादि रूपेण परिणमति । कालस्य तथा परिणामत्वादयमनित्यो लीलाविभूतौ परमपदे तादृशपरिणामाभावादयं नित्यो नित्यविभूताविति केचित् ।

आमोद:—शास्त्र परमपद में काल की उत्पत्ति आदि का प्रतिपादन नहीं करता है । लीलाविभूति में व्यूहों के कृत्यों के प्रतिपादनकाल में बतलाया गया है कि काल की कलानिमेष आदि रूप से सृष्टि करना अनिरुद्ध का कृत्य है । जिस तरह प्रकृति का महत् आदि के रूप में परिणाम होता है; उसी प्रकार काल का कलानिमेष काष्ठा आदि के रूप में परिणाम होता है । इस तरह के परिणाम से युक्त होने के कारण काल लीलाविभूति में अनित्य है तथा नित्यविभूति में नित्य है; यह कुछ विचारक कहते हैं ।

**मूल ४९—केचित्तु कालं नास्तीत्याहुः । ५०—प्रत्यक्षेणागमेन च तत्सिद्धेर्नैवं वक्तुं शक्यते ।**

अनु०—कुछ लोग (बौद्ध) कहते हैं कि काल ही नहीं है, किन्तु

---

पाठभेद ४९—केचित्कालो नास्तीत्याहुः । प्रत्यक्षेण आगमेन च सिद्धत्वात्तथा वक्तुं न शक्यते ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

वे वैसा नहीं कह सकते हैं क्योंकि प्रत्यक्ष एवं आगम के द्वारा काल की सिद्धि होती है।

छा० तो०—केचिदित्यनादरोक्तिः। कालस्य सिद्धिः प्रमाणद्वयेन भवति प्रत्यक्षेण आगमेन च। पत्यक्षं तावत्–स्थावरजंगमात्क समस्त पदार्थानां कालकृत परिणामदर्शनात्। 'कलामुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः' 'कालस्वरूपं विष्णोश्च यन्मयोक्तं तवानघ' 'मधुश्चमाधवश्च वासन्तिक ऋतू' इत्यादिषु श्रौतस्मार्त वाक्येषु कालतत्त्वस्य प्रतिपादनमुपलभ्यते। अतएव कालस्याभावप्रतिपादनं नोचितम्।

आमोदः—मूल में केचित् पद के द्वारा कालतत्त्व को नहीं मानने वाले बौद्धों के प्रति अनादर सूचित किया गया है। काल की सिद्धि प्रत्यक्ष एवं आगम इन दो प्रमाणों से होती है। प्रत्यक्षतः स्थावर जंगमात्मक सभी पदार्थों का कालकृत परिणाम देखा जाता है। 'कला, मुहूर्त, काष्ठा, दिन–रात सभी' 'हे मैत्रेय मैंने जो तुम्हें भगवान् विष्णु का कालस्वरूप बतलाया' 'वसन्त, चैत्र, वासन्तिक ऋतु' इत्यादि श्रौतस्मार्तवाक्यों में भी कालतत्त्व का वर्णन उपलब्ध होता है; अतएव कालतत्त्व का आभाव प्रतिपादन उचित नहीं है।

**मूल ५१-दिङ्नामकमतिरिक्तं द्रव्यमस्तीति वहव आहुः।**

**५२-बहुभिर्हेतुभिराकाशादिष्वन्तर्भावसिद्धे नैतदपि युज्यते।**

---

पाठभेद ५१—वहवो दिगित विलक्षणमेकं द्रव्यमस्तीति वदन्ति, ५२—अनेक हेतुभिराकाशादावन्तर्भावसंभवात्तदपि न युक्तम्।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अनु०-वैशेषक आदि विद्वान् कहते हैं कि दिक् नामक एक अतिरिक्त द्रव्य हैं, अनेक कारणों से उसका आकाश आदि में अन्तर्भावसिद्ध हो जाने से, दिक् को अतिरिक्त द्रव्य मानना उचित नहीं है।

छा०तो०-वैशेषिका नैयायिकाश्च नव द्रव्याणि स्वीकुर्वन्तः दिङ्नामकमप्येकं द्रव्यं स्वीचक्रुः। तथा चाह वैराजः-भूमिरापो-ज्योतिरनिलोनभः कालस्तथा दिशः। आत्मा मन इतिप्राहुः द्रव्याणि नव तद्विदः।" दिशो द्रव्यत्वं साधयन्तो वैशेषिकाः प्राहुः-प्राक्प्रत्यक्-सन्निकृष्टविप्रकृष्टव्यवहारदर्शनादेव दिङ्नामकमतिरिक्तं द्रव्यं सिद्ध्यति। तथाहि-उदयाचलतत्सन्निहितपदार्थयोर्मध्ये विद्यमाना देशाः तयोरपेक्षया स्वल्पा एव। तैस्स्वल्पैर्देशैस्सह सूर्यस्यातपेनद्वारा सम्बन्धो भवति। नतूदयाचलास्ताचलसन्निहितदेशस्य। सूर्येविद्यमानानां मध्यवर्तीदेशानां संयोगस्याल्पत्वमेव सूर्यसन्निधानमितिकथ्यते। तत्सनिधानम्घटादौ भासते. यतो हि दिक् सूर्येविद्यमानं तन्मध्यवर्ती देश संयोगाल्पत्वं आनयित्वा घटादौ निक्षिपति। स्वसमवायि-संयुत-संयोगो सबन्धेन सः अल्पमध्यवर्ती देश संयोगः घटादावायाति। स्वसमवायिसंयुक्तसंयोगघटकेन स्व पदेन अल्पसंयोगोगृह्यते; तस्यसमवायिकारणं सूर्यः, तेन संयुक्तादिगिति। तस्याःसंयोगो घटादिषु वर्तते। इत्थम् सूर्यस्थमध्यवर्ती देशसंयोगाल्पत्वस्यानयनात् दिगुपनेत्रीति कथ्यते। सैव पूर्वादिव्यवहारस्य कारणम्। अतएव दिङ्नामकमतिरिक्तं द्रव्यमिति सिध्यति।

इति वैशेषिक नैयायिकयोरभिमतमतनुद्य निराकरोतिबहुभिर्हेतुभि-

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

रित्यादिना—अयमाशयः नैयायिकप्रभृतिभिर्दिग्द्रव्यस्यकल्पना नोचिता यतः सूर्यस्थाल्पदेश संयोगरूपोपाधिः नैयायिकमते प्राक्त्वसन्निहितत्वादीनामुपाधिरिति कथ्यते। सोऽल्पदेशसंयोगरूपोपाधिः स्वसमवायिसंयुक्तावयसंयोगादिरूप—परम्परा सम्बन्धेन घटादिषु तिष्ठति। अस्मिन् संबन्धे स्वपदेन सूर्यगताल्पदेशसंयोगः गृह्यते। तस्य समवायिकारणं सूर्यः, तेन संयुक्त आतपः आतपस्य संयोगो घटादिना सह वर्तते। अनेन परम्परासम्बन्धेनैवाल्पदेशसंयोगो घटादिष्वायाति तदर्थमतिरिक्तद्रव्यस्य दिशः कल्पनमन्याय्यम्। किञ्च घटादिषुसूर्यगताल्पदेशसंयोगरूपोपाधेरूपनेतृत्वमाकाशस्यैव स्वीकारेणाकाशेनैवपूर्वादिव्यवहारसंभवात् दिशोऽपनेतृत्वकल्पना व्यर्था। न च 'पद्भ्यांभूमिर्दिशः श्रोत्रात्' ( ऋ०अ०८।४।१९ + ऋ०मं०१०। ९०।१४।वा०सं०३१।१३ + तित्त्यु०१२।६ ) इति श्रुतेरेव दिशोतिरिक्तद्रव्यत्व सिद्धिरितिवाच्यम् श्रुतिषु दिगभिमानी देवताया एव सृष्टिवर्णनात्। अतो नास्ति आकाशादिव्यतिरिक्तं दिङ्नामकद्रव्यम्।

आमोद—वैशेषिको तथा नैयायिकों ने नवद्रव्यों को स्वीकार करते हुए दिक नामक भी एक द्रव्य माना है। वैराज ने भी कहा है। द्रव्यों के जानकारों ने पृथिवी, जल, तेज, वायु, आकाश काल दिक्, आत्मा और मन, इन नव द्रव्यों को कहा है। दिशा के द्रव्यत्व की सिद्धि करते हुए वैशेषिकों ने कहा है-पूर्व, पश्चिम सन्निकट दूर आदि व्यवहारों को ही देखकर दिक् द्रव्य की सिद्धि हो जाती है। दिशा का द्रव्यत्व साधन प्रकार इस तरह है- उद-

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

याचल एवं उदयाचल सन्निहित पदार्थं के मध्य में जितने देश हैं वे उन देशोंसे स्वल्प हैं। उन स्वल्प सभी देशों से आतप के द्वारा सूर्य का संयोग होता है, उदयाचल एवं अस्ताचल सन्निहित देश का नहीं। सूर्यस्थ मध्यवर्ती देश संयोगाल्पत्व से ही सूर्य का सन्निधान कहलाता है। वह सूर्यस्थ सन्निधान घटादि में भाषित होता है, क्योंकि दिशा सूर्यस्थ मध्यवर्ती देश संयोगाल्पत्व को घटादि में लाकर रख देती है और वह मध्यवर्ती देश संयोगाल्पत्व घटादि में स्वसमवायि संयुक्त संयोग संबन्ध से आता है। यहां पर स्व पद से अल्पसंयोग लिया जाता है। उसका उसका समवायीकारण सूर्य है। उससे संयुक्त दिशा का संयोग घटादि से है। इसी संबन्ध द्वारा दिशा सूर्यस्थ उपर्युक्त संयोग को घटादि में ला देती है। अतएव दिशा उपनेत्री है। वह पूर्वादि व्यवहारों का कारण भी है अतएव दिशा को अतिरिक्त द्रव्य मानना चाहिये। इसी अर्थ का अनुवाद करके ग्रन्थकार बहुभिर्हेतुभिः-इत्यादि के द्वारा उसका खण्डन करते हैं। सूर्यस्थाल्पदेश संयोगरूप उपाधि ही नैयायिकों के मत में प्राक्त्व एवं सन्निहितत्व की उपाधि मानी जाती है। वह अल्पदेशसंयोगरूप उपाधि घटादि में स्वसमवायिसंयुक्तातपसंयोगादि रूप परम्परा सम्बन्ध से घटादि में आती है। यहां पर स्वशब्द से सूर्यगत अल्पदेश संयोग लिया जाता है। उसका समवायिकारण सूर्य हैं

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

उससे संयुक्त है आतप, उसका संयोग घटादि से है। इस परम्परा सम्बन्ध से सूर्यस्थ अल्पदेश संयोग घटादि में आ जाता है, अतएव उसको लाने के लिये एक नवीन दिग्द्रव्य की कल्पना उचित नहीं है। किञ्चसूर्यंगत अल्पदेश संयोग की उपनेत्री दिशा को नही मानकर आकाश को ही मान लेने से आकाश ही पूर्वादि व्यवहारों का कारण हो जायेगा। फलत; अप्रामाणिक दिग्द्रव्य की कल्पना अनुचित है। यदि कहें कि 'पद्भ्याभूमिर्दिशः श्रोत्रात् यह श्रुति ही दिक् तत्व की सिद्धि करती है तो ऐसी बात नहीं हैं, क्योंकि उक्त श्रुति में दिशाभिमानी देवता की सृष्टि का वर्णन किया गया है। इस तरह दिक्तत्त्व का आकाश में ही अन्तर्भाव हो जाने के कारण उसे अतिरिक्त द्रव्य मानने की कोई आवश्यकता नहीं है।

**सू०५३-आवरणाभाव एव आकाश इति केचिदाहुः। ५४-भावतया प्रतीयमानत्वान्न तदपि युक्तम्।**

अनु०—पृथिवी आदि आवरणों का आभाव ही आकाश है। यह कुछ लोग कहते हैं, किन्तु यह कहना उचित नहीं है क्योंकि उसकी भावरूप से प्रतीति होती है।

छा०तो०—आव्रियत अनेनेतिकरण व्युत्पत्त्या स्थूलपदार्थाः पृथिव्यादय आवरणशब्दवाच्याः। आवरणानामभावं एवाकाशः

पाठभेद—५३ केचिदावरणाभाव आकाश इति वदन्ति भावत्वेन भाना— त्तदपि न युक्तम्।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

इतिबौद्धानां मतं नोचितम् । 'अत्रश्येन पतति' 'अत्रगृध्रः' पतति' इत्यादिषुश्येनादिपतनदेशरूपेणाकाशस्य प्रतीतेः । किञ्च 'तस्माद्वैतस्मादाकाशः' 'यस्याकाशः शरीरम्' इत्यादिषु श्रुतिषु आकाशस्य सद्भाव प्रतीतेः ।

आमोद-जिसके द्वारा ढँका जाय इस करण व्युत्पत्ति के अनुसार आवरण शब्द पृथिवी आदि स्थूल पदार्थों का वाचक है । बौद्ध आदि विद्वान् कहते हैं कि पृथिवी आदि आवरणों का अभाव ही आकाश कहलाता है; किन्तु उनका यह कथन इसलिए उचित नहीं है कि- यहां पर बाज पक्षी गिर रहा है, यहां पर गृध्रपक्षी गिर रहा है- इत्यादि प्रतीतियों में बाज, श्येन आदि पक्षियों के पतन प्रदेश आदि के रूप में आकाश की प्रतीति होती है । 'निश्चय ही उस परमात्मा से आकाश उत्पन्न हुआ' 'आकाश जिसका शरीर है ।' इत्यादि श्रुतियों में आकाश के सद्भाव की प्रतीति होती है ।

मू०-५५ अन्ये च केचिदाकाशमेनं नित्यं, निरवयवं, विभुमप्रत्यक्षं चाहुः ५६-भूतादेरुत्पत्त्या अहंकारादिष्वभावात् चक्षुषो विषयत्वाच्च न तच्चतुष्टयं युक्तम् ।

अनु०-कुछ (दार्शनिक नैयायिक वैशेषिक) इस आकाश को

पाठभेद-५५ परे केचिदमून्नित्यं निरवयवं विभुमप्रत्यक्षमाहुः ५६-भूतादेरुत्पत्तेरहङ्कारादावभावाच्छब्दस्पर्शादिमत्त्वाच्चक्षुर्विषयत्वाच्चैतच्चतुष्टयमप्ययुक्तम् ।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

नित्य, विभु, निरवयव और अप्रत्यक्ष मानते हैं भूतादि (तामस) अहंकार से उत्पन्न होने, अहंकार आदि में अभाव होने तथा चाक्षुष प्रत्यक्ष का विषय होने से आकाश का वह ( नित्यत्व ) निरवयवत्व, व्यापकत्व तथा अप्रत्यक्षत्व ) चतुष्टय उचित नहीं है।

छा०तो०-नैयायिकाः आकाशं नित्यं, विभुं निरवयमपरोक्षं न स्वीकुर्वन्ति । तन्नोचितम्- यतः स्वसूक्ष्मावस्थारूप शब्दतन्मात्रावस्थावस्थितस्याकाशस्य भूतादिसंज्ञकात् तामसाहंकाराद्रुत्पत्ति श्रवणात् । यत् कुतश्चिदुत्पद्यते तन्नित्यं न भवति, उत्पत्तिमत्त्वात् । आकाशोऽप्युत्पत्तिमत्वात्, घटादिवदनित्यः । किञ्चाकाशस्योत्पत्तिमत्त्वात् घटादिवदेव सावयवत्वसिद्धिः । अतो निरवयव आकाशो नास्ति । किञ्च यद्याकाशो विभुर्भवेत्तर्हि स आकाशादिष्वप्युपलभेत । यस्मान्नोपलभ्यते तस्मादाकाशोऽविभुः । 'नील आकाशः' इत्यादिषु प्रतीतिषु नीलरूपेण प्रतीयमानत्वादप्याकाशस्यप्रत्यक्षत्वसिद्धिः । पञ्चीकरण प्रक्रिययाऽपि आकाशस्यरूपवत्त्व सिद्धिरित्यपास्तं नैयायिकानां नित्यत्वादिवादः ।

आमो०-नैयायिक एवं वैशेषिक आकाश को नित्य, विभु निरवयव और परोक्ष मानते हैं। किन्तु उनका मत उचित नहीं है- क्योंकि अपनी सूक्ष्मावस्थारूप शब्दतन्मात्रारूप से आकाश भूतादि संज्ञक तामसाहंकार से उत्पन्न होता है । जो उत्पन्न होता है, वह अनित्य होता है। उत्पन्न होने के ही कारण आकाश

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

भी अनित्य सिद्ध होता है, तथा उत्पन्न होने के ही कारण आकाश उत्पत्तिमान् घटादि के समान सावयव सिद्ध होता है। किञ्च यदि आकाश व्यापक होता तो उसकी अहंकार के भीतर भी उपलब्धि होती है चूंकि नही होती है, अतएव आकाश अव्यापक सिद्ध होता है। आकाश है' इत्यादि प्रतीतियों में रूपवान् प्रतीति होने के कारण आकाश का चाक्षुष् प्रत्यक्ष होता है; अतएव वह परोक्ष नहीं है। पञ्चीकरण प्रक्रिया से भी आकाश के रूपवत्व की सिद्धि होती है। अतएव नैयायिकों आदि का आकाश के विषय में नित्यत्व आदि का वादा खण्डित हो गया।

मू०५७–वायुरप्रत्यक्ष इत्यप्ययुक्तम् त्वगिन्द्रियेण गृह्यमाणत्वात्।

अनु०–वायुका साक्षात्कार नहीं होता है: यह भी कहना अनुचित है क्योंकि वायु का त्वगिन्द्रिय के द्वारा साक्षात्कार होता है। और किसी भी ज्ञानेन्द्रिय से जिसका साक्षात्ग्रहण हो उसका साक्षात्कार हो माना जाता है।

मू०५८– तेजश्च भौमादिभेदेन बहुविधम्। ५९–तेष्वादित्यादितेजांसिस्थिराणि दीपादितेजांस्यस्थिराणि। ६०–तेजसो रूपं रक्तम्; उष्णः स्पर्शः।

---

पाठभेद–५७ त्वगिन्द्रियेणग्रहणा 'द्वायुरप्रत्यक्ष, इत्यप्ययुक्तम्।

पाठभेद–५८ तेजो भौमादिभेदेन बहुविधम्। ५९–अत्रादित्यतेजः स्थिरम् दीपादितेजोऽस्थिरम्।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

अनु०–तेज भी भौम आदि के भेद से अनेक प्रकार का होता है। उनमें सूर्य आदि का तेज स्थिर है तथा दीपादि का तेज अस्थिर; तेज का रूप लाल और स्पर्श गर्म है।

छा०तो०–तेजसः दिव्य, भौमौदर्याकरजभेदेन अनेके भेदा भवन्ति। तत्र अबिन्धनं तेजो दिव्यम्, पार्थिवेन्धनं तेजो भौमम् यथादीपादिः। अशितपीतान्नपानादीधन तेज औदर्यम्। यथा जाठराग्निः। निरिन्धनं तेजः आकरजम् यथा सुवर्णादिः। ऐतेषां सामान्यतो द्वौ भेदौ भवतः–स्थिरमस्थिरञ्च। स्थिरं तेजः सूर्यादिः अस्थिरं तेजो दीपादेः। तेजसो रूपम् रक्तम्। नैयायिकाः वैशेषिकाश्च तेजसोरूपं भास्वरशुक्लमिति स्वीकुर्वन्ति तन्नोचितम् श्रुतिविरोधात्। श्रुतिर्हि–'यदग्नेरोहितं रूपम् तेजसस्तद्रूपामि' त्यादिना तेजसोरूपं रक्तमिति प्रतिपादयति। अतएव नैयायिकाभिमत तेजसःशुक्लभास्वररूपवत्त्वमप्रमाणिकत्वादापातरमणीयम्। तेजसः स्पर्शश्च उष्णो भवति। तत्तु नैयायिकादीनामपि समानम्।

आमोद– तेज के अनेक भेद हैं, दिव्य, भौम औदर्य तथा आकरज के भेद से। जिस तेज का इन्धन जल हो उसे दिव्य कहते हैं, जैसे सूर्य, पार्थिव वस्तुएँ लकड़ी आदि जिसका इन्धन हो उसे भौम तेज कहते हैं; जैसे प्रदीप। जो खाए पिए अन्न जलको अपना इन्धन बनाता है उसे औदर्य तेज. कहते हैं, जैसे जाठराग्नि। जिसका कोई इन्धन नहीं हो उसे आकरज तेज कहते हैं, जैसे सुवर्ण आदि। पुनः सामान्यतः तेज के दो विभाग

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

किये जाते हैं स्थिरतेज और अस्थिरतेज। सूर्य आदि स्थिर तेज हैं और प्रदीप आदि अस्थिर तेज। तेज का रूप रक्त (लाल) होता है। नैयायिक और वैशेषिक तेज का रूप भास्वरशुक्ल मानते हैं किन्तु वह अप्रामाणिक है। तेज के लाल रूप का वर्णन करती हुई छादोग्य श्रुति कहती है-जो अग्नि का लाल रूप दिखायी देता है, वह तेज का रूप है। (छा० उ० ६।१) अतएव नैयायिकाभिमत तेज के भास्वरशुक्ल रूप की कल्पना वेद विरुद्ध होने के कारण अप्रामाणिक है। तेज का स्पर्श उष्ण होता है, इस विषय में सभी दार्शनिकों का विचार समान ही है।

मूल ६१-जलस्य रूपं शुक्लम्, शीतस्पर्शो मधुरश्च रसः। ६२-पृथिव्या वर्णा रसाश्च बहुविधाः। ६३-स्पर्शस्त्वस्या वायोश्चानुष्णाशीतः।

अनु०-जल का रूप शुक्ल, स्पर्श शीतल तथा मधुर रस होता है। पृथिवी के वर्ण और रस अनेक प्रकार के होते हैं। पृथिवी तथा वायु के स्पर्श तो अनुष्ण शीत होते हैं।

छा० तो०-जलस्य स्वाभाविको वर्णः शुक्लः अन्ये वर्णास्त्वौपाधिकाः, त्रिविधस्पर्शेषु शीतः स्पर्शः स्वाभाविकः उष्णादिस्पर्शास्त्वौपाधिकः, अस्यस्वाभाविकोरसः मधुरम्। एवमन्यदपिज्ञेयम्। शिष्टंस्पष्टम्।

---

पाठभेद ६१-जलस्यरूपं शुक्लं, स्पर्शं शैत्यम्, रसो माधुर्यम्। ६२-भूमे रूपं, रसश्च बहुविधः। ६३-स्पर्शोऽस्या वायोश्चानुष्णाशीतः।

CCO. Vasishtha Tripathi Collection. By Siddhanta eGangotri Gyaan Kosha

